# माघमाहात्म्यप्रारम्भः



श्रीकाशीजीमेमहल्लेढुंढिराजगणेशकेपासदाऊअग्निहोत्रीकेसिद्धिविनायकयन्त्रालय
मेवायुपुराणकामाघमाहात्म्यछापागयालि० भैरोपाठक छापनेवालामानजिसेलेनाहोयउसेढुंढि
राजकेपासदाऊअग्निहोत्रीकेदुकानपरमिलेगा मि० चैत्रकृष्ण ७ वारबुध सम्वत् १९४० ॥ ॥

श्रीगणेशाय नमः अथ वायुपुराणोक्त माघमाहात्म्य प्रारम्भः नारद उवाच संसारे क्लिश्यमानानां जंतूनां पापकारिणां कर्मणा भ्रा
म्यमाणानां का गतिः कमलोद्भव १ सुखमिच्छंति ते मूढा नेच्छंति सुखकारणं नेच्छंति दुःखलेशं वा तद्धेतौ सततं यतः २ अलसा धर्मविमुखा
विषयासक्तचेतसः तेषां मुक्तिः कथं ब्रह्मन् रतिर्धर्मे कथं भवेत् ३ कृपाविष्टेन चित्तेन नराणां तान् समुद्धर धर्मानिपेन वचसा विष्णुभक्तिविवर्धि
ना ४ वन्हिमादातुकामानां बालानां मातरो यथा निवर्तयित्वा सुरुचिं जनयंति फले विभो ५ तथा भागवता लोके साधवः समदर्शिनः
निवर्तयित्वा बोधेन विषयानलमिच्छतः ६ जंतून्धर्मफलं तेषां दर्शयंति हितेच्छया पितरो मातरोऽज्ञानां शास्तारः साधवो नृणां ७ त्वमा
दिवक्ता धर्माणां त्वं सर्वं वेत्सि तत्त्वतः कर्मणा केन कालुष्यं मनसो गच्छति द्रुतं ८ धर्मास्तु बहवः संति श्रुतिस्मृत्युदिता अपि ते धर्माः कष्टसा
ध्या हि तेष्वादौ विमुखा नराः ९ वद धर्मं सुखोपास्यं सर्वबंधविनाशनं यत्कुर्वतोपैति समस्तबंधो जायते शुद्धमतिरास्तिकी च १० भक्ति
हरौ न तु स्त्वेषु सख्यं तद्देव तेषां हितकाम्यया वद सूत उवाच इति तद्वचनं श्रुत्वा ब्रह्मा लोकपितामहः ११ संप्रहृष्टमना भूत्वा नारदं वाक्य
मब्रवीत् ब्रह्मोवाच त्वमेव नूनं बत भूरिभागो निमित्तबंधुर्भुवि मानवानां १२ त्वमग्रणीर्धर्मदृशां क्षपीरां दयापरा भागवता हि लोके
किं वर्णयामि मम भाग्यमहं महात्मा भवादृशो भागवतस्तनूभवः १३ त एव धन्याः खलु पुण्यशीला येषां सुता भागवता हि लोके हितेच्छ
या तु मंदानां कृतः प्रश्नस्त्वया मुने १४ संतोषयति लोकांश्च संतोषयति मे मनः पुनाति शास्त्रसंप्रश्नो वासुदेवकथाश्रयः १५ वक्तारं पृच्छ
कं श्रोतृंस्तत्पादसलिलं यथा प्रणम्य विष्णुं पुरुषं पुराणं निरामयं निश्चलमद्वितीयं १६ वक्ष्यामि गोप्यं सुलभं शुभावहं धर्मं त्वया पृष्टम
घौघनाशनं सर्वेषामेव धर्माणां स्नानं माघे विदुर्बुधाः १७ विना स्नानं कृतं कर्म गजभुक्तकपित्थवत् तत्रापि प्रातर्यः स्नायात् विष्णुभक्तिप

णयणः १८ नतस्मिन्पापलेशोस्तिक्रतघ्नेसुकृतंयथा शौचंस्नानंद्वयंमातापितरौसर्वकर्मणां १९ नित्यस्नानेत्वशक्तश्चेत्कुर्यान्मासत्र
यंबुधाः तुलासंस्थेदिनकरेमकरस्थेचभास्वति २० मेषगेचसदाकुर्यात्प्रातस्स्नानमतंद्रितः नकुर्यात्त्रिषुमासेषुप्रातःस्नानंनराधमः २१ रौरवंन
रकंयातियावदिंद्राश्चतुर्दश कार्तिकंसर्वमासेभ्यःसहस्रफलदंविदुः २२ तस्माल्लक्षगुणोमाघइतिप्राहजनार्दनः नमाघमासात्परमोस्तिधर्मः
संसारदुःखविनिवर्त्तितुक्षमः २३ यथाकलौविष्णुकथापरागतिः स्नानंतथैवंमकरेदिवाकरे पापानिविलयंयांतिमासीवभगोदये २४ समाग
च्छंतिपुण्यानियथागुरुत्तपोदये जन्मकोटिसहस्रेषुयत्पापंसमुपार्जितं २५ तत्पापंसकलंघोरंमाघस्नानेननश्यति नमाघमासात्परमो
स्तिलाभोनमाघमासात्परापरागतिः २६ नमाघस्नानात्परोस्तिधर्मोनमाघस्नानात्परःपरायणः अकृत्वामाघमासेतुप्रातःस्नानंनराध
मः २७ पैशाचींयोनिमासाद्यतिष्ठत्याभूतसंप्लवं नपापलेशोनचकर्मबंधःपुनर्भवोवामनुजेमुनींद्र २८ येनेहमाघेमकरस्थितेरवौनद्यांज
लेस्नातमनूदितेर्के गंगाद्याःसरितःसर्वादेवखातानियानिच २९ पुष्करिण्योह्रदावाप्योयेचान्येजलाशयाः सन्निधानंप्रकुर्वंतिजलमा
त्राशयेमुने ३० प्रातःस्नातुमाघमासेमकरस्थेदिवाकरे ग्रामाद्बहिर्जलेगत्वामुच्यंतेसर्वकिल्बिषैः ३१ ब्रह्मघ्नंवापितृघ्नंवागोघ्नंभ्रूणहनंत
था स्त्रीघ्नसुरापंमित्रघ्नंस्तेयिनंगुरुतल्पिनं ३२ अभक्ष्यभक्षिणंक्रूरंसदापैशून्यवादिनं अधर्मवर्तिनंदंभंतथैवानृतभाषिणं ३३ परस्वसू
चकंदेवगुरुद्रव्यापहारिणं वृथावृक्षस्यछेत्तारंवर्णसंकरकारिणं ३४ गृहेष्वग्निप्रदातारंविषकर्मप्रयोगिनंनिंदकंसाधुवृत्तानांतथाचो
न्मार्गवर्तिनं ३५ हेतुवादरतंद्यूतकर्माणंनिंदिताश्रयं अयाज्ययाजकंविप्रंतथादुष्टप्रतिग्रहं ३६ परदाराभिनिरतंपरद्रव्यापहारिणं पंक्ति
भेदप्रकर्वाणंदपत्योर्विग्रहप्रदं ३७ एवमादीनिपापानिकुर्वाणमपिनारद प्रातःस्नानात्तुनाभीतिमाघोगर्जतिगर्जति ३८ किंचिदभ्युदिते

भानौ संस्थापोदिवानिशं अत्युग्रपापिनं वापि प्रातःस्नानात्पुनीमहे ३९ निःस्वः कोऽस्त्यधं को रोगी स्तीर्यो निभुवनत्रये निरीस्य माघमा
संतु सदा प्रातर्जलाशये ४० अस्नानपापिनं मूढं शापं दत्वा व्रजंति च अस्नातो माघमासे तु मानवो नीडो च तु स्पृशे ४१ नरः श्वा डालनाया ति
नारी चेद्विधवा भवेत् सम्यक् चीर्णानि पुण्यानि वासुदेवपराङ्मुखान् ४२ न निष्फलं ति देवर्षे सत्यं सत्यं मयोदितं अनंतजन्मानुगतं महांतं दु
ष्कर्ममूलं प्रतिबंधमुग्रं ४३ स्नानं खलु अभ्युदितेन राणां निवर्तयत्याशु रविर्यथा हिमं सत्वं च शुध्यत्यचिरेण पुंसो भक्तिर्हरौ नित्यसुखे च जायते ४४
निरूपमं भाग्यमनल्पमायुर्माघे विवृद्धिः स्नानपरस्य जायते माघस्नानस्य माहात्म्यं वाच्यमानं द्विजोत्तम ४५ न श्रृणोति विमूढात्मा तस्मात्को
न्वपरः पशुः यथा गंगा नदीनां च देवानां तु यथा हरिः ४६ वृक्षाणां च यथाश्वत्थः पशूनां गौर्यथा मुने तथा वै माघमासो यं मासानामुत्तमोत्तमः
४७ वेदानां च यथा साम मंत्राणां प्रणवो यथा गायत्री छंदसां यद्वत्पक्षिणां गरुडो यथा ४८ वैष्णवानां यथा रुद्रः ऋभूनां मधुमाधवौ मासा
नां प्रवरो मासो माघमासः उदीरितः ४९ यथाऽहीनां तु गरुडो रोगाणां मौषधं यथा पर्वतानां यथा वज्रं मातंगानां यथाऽकुशः ५० हिमानां तु य
था वह्निः कौशिकानां यथा रविः पापानां विष्णुनामैव दैत्यानां केशवो यथा ५१ तथा मनुष्यवर्धानां माघमासो निवर्तकः न सूर्यादिग्रहा
श्चैनं न पिशाचा न चोरगाः ५२ माघस्नानरतं जंतुं न स्पृशंति कदाचन लिखितानि च पापानि बहूनि यमशासने ५३ तानि मार्जयति क्षिप्रं चि
त्रगुप्तो यमाज्ञया माघस्नानकृतं तद्वज्जंतुनां नन सत्वरं ५४ तेन पापानि नश्यंति तस्मान्मार्जय शासनं यमस्त्वाज्ञापयत्येवं चित्रगुप्तं महामतिः
५५ संगाद्दैवात्स्वकीयाद्वा माघस्नानं करिष्यति तदास्माकमवस्थानं कुत्र स्यादित्यहर्निशं ५६ इत्थं गर्जंति पापानि हत्यादीनि महांत्यपि
कृत्वोषसि स्नानमनन्यमानसो माघे तु संस्थे मकरे दिवाकरे ५७ भक्त्या समभ्यर्च्य तथैव माधवं मानुष्यं नैव पुनः पिबंति संसारसर्पदष्टा

नांजंतूनामविवेकिनां ५८ माघेतूषसिपत्स्नानकरणंपरमौषधं इहजन्मनियत्पापंयत्पापंपूर्वजन्मसु ५९ तत्पापंनाशमायातिसत्यंसत्यं
नसंशयः माघस्नानंकरिष्यामीत्येवंसंकल्पतोमुने ६० ध्रुवंसंचितपापानिचलंत्यद्यप्रयत्नतः वहिर्गमनमात्रेणविद्रवंतिदिशोदश ६१
ब्राह्मणाःक्षत्रियोवापिवैश्यःशूद्रोपिवासती प्रातर्माघेवहिःस्नानंकुर्यादितिश्रुतीरितं ६२ ब्रह्मचारीगृहस्थोवावानप्रस्थोथवायतिः प्रातःप्रा
तःसदास्नायान्माघेमास्युदितेरवौ ६३ अस्नात्वाचाप्यदत्वाचमाघमासोगतोयदि श्वानयोनिशतंप्राप्यविष्ठायांजायतेक्रिमिः ६४ तस्मा
त्स्नानंप्रकुर्वीतमाघेमासिद्विजोत्तम माघस्नानपरोधर्मःसंसारोत्तारकारणः ६५ नमाघमासात्परमोहिधर्मोनमाघमासात्समःसरोस्ति न
माघमासात्परस्तपोस्तिनमाघमासात्परःक्रतुर्वा ६६ इतिश्रीवायुपुराणेमाघमाहात्म्येप्रथमोध्यायः १ नारदउवाच साधूदितंदेवगु
रोमहामृतंसुगोप्यमेतन्मनसोतिहर्षदं सगद्गदंमेवचनंचजातंसानंदबाष्पेनयनेप्रहृष्टे १ माघस्नानंकथंकार्यंमाघेमाधववल्लभे पुत्रायवद
शिष्यायविस्तरात्कमलासन २ ब्रह्मोवाच माघमासविधिंवक्ष्येशृणुनारदसादरं यंश्रुत्वाचसकृन्मर्त्योनभूयोजायतेभुवि ३ पुष्यमासेसिते
पक्षेदशम्यांप्रारभेद्व्रती माघमासदशम्यांतुव्रतमेतत्समापयेत् ४ पौर्णमास्यांसमारभ्यपौर्णमास्यांसमापयेत् मकरंवासमारभ्यकुंभेवाथसमा
पयेत् ५ दशम्यादिदशम्यांतःसमाप्तःशुभकर्मणि पौर्णिमादिर्यांज्ञिकानांपितृणांसंक्रमादितः ६ एतेष्वन्यतमेपक्षेसमारभ्यव्रतंचरेत् मा
घस्नानंकरिष्यामिमकरस्थेदिवाकरे ७ आसमाप्तिंमहादेवनिर्विघ्नंकुरुमाधव इतिसंकल्प्यपूर्वेद्युःकुर्यात्स्नानमनंतरं ८ अरुणोदयवे
लायांसमुत्थायद्विजोत्तम कृत्वावहिःस्थलेदूरेमलमूत्रविसर्जनं ९ नगोष्ठेनशुभेदेशेनवनेकेवलस्थले नवल्मीकेनकूपेचनच्छायायांनप
द्धतौ १० नदीतीरेनकर्तव्यंमलमूत्रविसर्जनं यानद्यावानदीतीरेमलमूत्रविसर्जनं ११ कुर्याद्यदिविमूढात्मारौरवंकल्पमश्नुते तस्माद्दूरेतु

कर्तव्यंमलमूत्रविसर्जनं १२ ततःशौचंतुकर्तव्यंपात्रस्थेनैववारिणा नदीजलेनयःकुर्याच्छौचंकर्मद्विजाधमः १३ विष्टाकूपेपतत्याशुस्व
र्गस्थैःपितृभिःसह कूपकुल्यातडागादिजलेशौचंकरोतियः १४ कल्पकोटिसहस्रैस्तुनरकान्ननिवर्तते तस्मात्कमंडलुजलेनत्यजेत्तुक
दाचन १५ एकालिंगेकरेतिस्रःउभयोस्तुद्वयंस्मृतं पंचपादेदशैकस्मिन्नुभयोःसप्तमृत्तिका १६ अर्धप्रसृतिमात्रातुप्रथमामृत्तिकागुदे द्विती
याचतृतीयाचतदर्धार्धाप्रकीर्तिता १७ मृदाशौचंतुकर्तव्यंयथागंधक्षयोभवेत् मूत्रोत्सर्गविधिस्त्वेवंगृहस्थानांविधिःस्मृतः १८ एतस्माद्द्वि
गुणंप्रोक्तंवर्णिनांवनवासिनां पूर्वस्माद्द्विगुणंप्रोक्तंयतीनांचचतुर्गुणं १९ गंधक्षयकरःशौचःस्त्रीशूद्राणांविधिःस्मृतः वल्मीकांमूषकोत्खातां
सेतोमार्गेव्रजेग्रहे २० अन्यशौचावशिष्टांचवर्जयेन्मृत्तिकांबुधः नान्यांवैमृदमादायकुर्याच्छौचंह्रदादिषु २१ आर्द्रकाष्ठकरोद्धारांमृत्तिकांतुस
माहरेत् पादौप्रक्षाल्यविप्रेंद्रदंतधावनमाचरेत् २२ प्रतिपत्पर्वषष्ठीषुनवम्यांद्वादशीदिने दंतानांकाष्ठसंयोगाद्दहेदासप्तमंकुलं २३ अनिषि
द्धदिनेयस्तुनकुर्याद्दंतधावनं कृत्वातुयातनांघोरांदरिद्रोभुविजायते २४ तृणपर्णैःसदाकुर्याद्दंमाएकादशींविना तयोरपिचकुर्वीतजं
बूनिंबरसालकैः २५ गंडूषमथवाकुर्याद्दशवारंद्विजोत्तम संकल्पविधिवत्पश्चात्स्नात्वासाजलमाविशेत् २६ समस्तजगदाधारशंखचक्रग
दाधर देवदेहिममानुज्ञांपुण्यतीर्थनिषेवणे २७ यन्नखाग्रसमुद्भूतागंगात्रैलोक्यपावनी यत्पादेतीर्थजातानिमाधवंतंनमाम्यहं २८ योऽ
सौतीर्थपदोविष्णुस्त्रिरूपीपरमेश्वरः सएवद्रवरूपेणवसत्येवजलाशये २९ गंगाद्याःसरितःसर्वायस्मिन्कस्मिन्जलाशये संस्मरेत्स्नानकालेतु
सद्यःसंनिहिताःसदा ३० नंदिनीनलिनीसीतामालतीचमलापहा विष्णुपादाब्जसंभूतागंगात्रिपथगामिनी ३१ भागीरथीभोगवतीजा
न्हवीत्रिदशेश्वरी द्वादशैतानिनामानियत्रयत्रजलाशये ३२ स्नानकालेस्मरेन्नित्यंतत्रसन्निहितातुसा यामवनेतिमंत्रेणइमंमेइतिमंत्र

तः ३३ नदीस्ताः प्रार्थयित्वैवं देवायार्घ्यं निवेदयेत् नमः कमलनाभाय नमस्ते जलशायिने ३४ नमस्तेस्तु हृषीकेश गृहाणार्घ्यं नमोस्तु ते ॥
माघे मासि महादेव व्रतस्थोहं जगत्पते ३५ गृहाणार्घ्यं मया दत्तं माधवाय प्रसीद मे विष्णुपादाब्जसंभूते गंगे त्रिपथगामिनी ३६ गृहाणार्घ्यं
मया दत्तं जले सन्निहिता भव हृद्गंगे महापुण्ये गौतमस्याघनाशिनि ३७ गोदावरि गृहाणार्घ्यं त्र्यंबकस्य जटोद्भवे कलिंदशैलतनये पृथक्सा
गरगामिनि ३८ गृहाणार्घ्यं मया दत्तं यमुने फलदायिनि देवी मानससंभूते सरस्वत्यघनाशिनि ३९ गृहाणार्घ्यं मया दत्तं पृथक्सागरगामिनि अ
न्यां नदीं समुद्दिश्य दद्यादर्घ्यं यथाविधि ४० पृथक्सागरगामिन्यां नद्यां स्नानपरो नरः विना गोदां विना गंगां नदीमन्यां न कीर्तयेत् ४१ त्रीन्निमज्जा
थ पश्चात्तु मृत्तिकास्नानमाचरेत् तिलामलकपिष्टेन गोमयेन समाचरेत् ४२ पितॄन्गुरून्समुद्दिश्य प्रत्येकं स्नानमाचरेत् ततो घमर्षणस्नानं कु
र्यात्मंत्रादनंतद्विजः ४३ शालग्रामशिलावारि शिरसा धारयेत्ततः जलात्पश्चाद्विनिस्तीर्य तर्पयेद्देवतान्ऋषीन् ४४ पितॄंस्तथा शिखां स्कंधे द
क्षिणेनुन्यसेत्ततः शिखोदकं भूपतितं पिबंति पितरोखिलाः ४५ पुरा गरुडभीतस्तु सुधां शक्रः शिखासु सः चिक्षेपातीव लोलानां ज्ञात्वाऽहींद्रः
शशाप ह ४६ ब्राह्मणानां शिखाक्षित्या सुधा शक्रापनो भवेत् ब्राह्मणानां शिखाक्षिप्ताजलद्वारेण सा सुधा ४७ भूमौ निपतिता श्रांतु पितरो मत
कपालयाः द्विजानाक्षिप्य पक्षीद्रो न जग्राह शिखासुधां ४८ द्विजान्पप्रच्छ पक्षींद्रः किं शक्रो न्यक्षिपत्सुधां वः शिखास्विति ते प्रोचुर्न ति लोभा
द्द्विजोत्तमाः ४९ तस्मिन्नपरपक्षे तु पितरो द्विजसद्मगाः यूयं तस्माद्द्विजानीथ सत्यं ब्रूतेति सोब्रवीत् ५० अस्तीति पितरः प्रोचुः स्तेषां तुष्टो वरं ददौ
शिखासंस्था सुधा भूमौ पित्राहारो भवत्विति ५१ मार्जयंति शिरो ये तु नविसृज्य शिखोदकं अस्त्वथ्यानेमहाघोरे नरके ते पतंत्विति ५२ इति दत्वा वरं
तेभ्यो गरुडो रक्तलोचनः विप्रान्शशाप रोषेण जरामृत्यो स्तु निष्ठतिः ५३ जाना पीयूषसंसर्गान्नस्याद्बोनृतभाषिणां नैकमत्यं भवेत्क्वापीत्युक्त्वासौ न

रधीयत ५४ तस्माच्छिखोदकंदद्यात्पितृभ्यस्तुष्टिकारणं तस्वपितरोलोकेभूमिदेवाःप्रकीर्तिताः ५५ पश्चाद्वस्त्रंपरीधायपीडयित्वार्द्रवस्त्रकं वा
मप्रकोष्ठेनिक्षिप्यसम्यगाचम्यवारिणा ५६ भूमौनिक्षिप्यपश्चात्तुमंत्ररत्नेनप्रोक्षयेत् धृत्वाद्वादशपुंड्राणिसंध्याकर्मसमाचरेत् ५७ प्रातर्होमं
तथाकृत्वादेवर्षिपितृतर्पणं माघमासप्रियंदेवंशंखचक्रगदाधरं ५८ प्रसन्नसुस्मितंशांतंमाधवंपूजयेदथ गंधैःपुष्पैश्चनैवेद्यैर्धूपैर्दीपैर्मनो
रमैः ५९ अपूज्यपूजयेद्यस्तुमाधवंमाधवल्लभं कुलनाशोभवेत्तस्यपुण्यंचापिविनश्यति ६० पुष्पैरेकेनमाघेतुमाधवंपूजयेद्यदि कुलकोटिस
मायुक्तोमोदतेविष्णुमंदिरे ६१ मौल्यादानीयपुष्पाणिस्त्रीशूद्रादिर्द्विजोत्तम ब्राह्मणैःकारयेत्पूजांयस्मात्तुष्यहरेःप्रियं ६२ माधवंतुलसीपत्रै
र्मकरस्थेदिवाकरे सकृदभ्यर्च्यदेवेशंनपुनर्जायतेभुवि ६३ यःपूजांतुलसीहीनांमाघेमकरगेरवौ कुर्याद्यदिविमूढात्माहृदयेशल्यमर्पितं ६४
माधवेतुलसीहीनांपूजांकुर्याद्विजोत्तम कुलानिपातयेत्सत्यंनरकेरुधिरोदके ६५ योदद्यात्तुलसीपत्रंपादयोश्चक्रपाणिनः कुलकोटिस
मायुक्तोविष्णुलोकेमहीयते ६६ योदद्यात्तुलसीगंधमपिसर्षपमात्रकं कोटिजन्मार्जितंपापंतत्क्षणादेवनश्यति ६७ श्रीखंडचंदनोन्मिश्रं
कृष्णागरुसमन्वितं तुलसीचंदनोन्मिश्रंयोगंधंविष्णवेर्पयेत् ६८ कल्पकोटिसहस्राणिकल्पकोटिशतानिच वैकुंठेमोदतेनित्यंदशपूर्वैर्दशा
परैः ६९ यस्तुतस्याःपत्रशतंविष्णवेपरमात्मने समर्पयतितत्पुण्यंवक्तुंशक्तोनविद्यते ७० पितृन्गुरून्समुद्दिश्यतुलसींविष्णवेर्पिना ब्रह्महत्या
कोटिशतंअगम्यानांसहस्रकं ७१ अभितःकोटिपापानिदहत्यग्निरिवेंधनं यःपूजयतिदेवेशंकमलैःकमलेक्षणं ७२ तस्यपुण्यफलंवक्तुंकः
शक्तोदिविवाभुवि कमलैःपूजितेविष्णौकमलावसतेगृहे ७३ फलंतिकामाःसर्वेपिनैवदुःखंप्रजायते द्वात्रिंशदपराधानिक्षमतेपुरुषोत्त
मः ७४ अर्चितस्तुलसीपत्रैर्माधवोभक्तवत्सलः अपराधसहस्राणिक्षमतेनात्रसंशयः ७५ यःकुर्यात्तुलसीपत्रैःपूजांविष्णोर्महात्मनःपूर्ण

मद्गशतैतेनपूजितोमाधवोऽव्ययः ७६ जातीपुष्पंतु योदद्यान्माधेविष्णोर्महात्मनः जन्मकोटिसहस्रेपुनर्दरिद्रोभवेन्नरः ७७ विधवात्वंनचा
प्नोतिनारीजन्मशतेष्वपि नारीवापुरुषोवापिमाघेपुष्पसुगंधिनं ७८ दत्वाचैकंमहाविष्णोर्ब्रह्महत्यांव्यपोहति अगुरुंचप्रजपेद्यस्तुमाघेमाधवमव्ययं
७९ नारकींयातनांभुक्त्वाविडूराहोभवेद्ध्रुवं योदद्याद्गुग्गुलंधूपंमाधवायाव्ययात्मने ८० सभित्वामंडलंसौरंविष्णोःसायुज्यमाप्नुयात् धूपहीनां
सपर्यांतुयःकुर्यात्परमात्मनः ८१ विष्ठाक्रिमित्वमाप्नोतिजन्मकोटिशतेष्वपि दशांगंगुग्गुलंधूपंयस्त्वर्पयतिविष्णवे ८२ नतस्यसंततेर्हानिर्नपा
पीजायतेकुले स्वयंमोक्षमवाप्नोतिनात्रकार्याविचारणा ८३ घंटानादंतुयःकुर्यात्पूजाकालेमहात्मनः स्तूयमानोदेवगणैर्विष्णुलोकेमहीयते
८४ घंटानादविहीनंतुयःकुर्याद्देवतार्चनं सभुक्त्वानरकान्घोरान्मूकोवधिरोभवेत् ८५ दीपदानंतुयःकुर्याद्देवायपरमात्मने अज्ञानांध
तमोभित्वासाक्षात्पश्यतितंहरिं ८६ श्रूयतेपितृगाथापिदीपदानेमुनीश्वर यःकोवास्मत्कुलेजातोमाघेमासिहरेःपुनः ८७ दद्याद्दीपंप्रयाणावा
पिसनःसंतारि[illegible] दीपायवर्तितैलंवापात्रंवायोददातिवै ८८ नापिचानपुनःकर्मलेशमात्रंनविद्यते तैलपात्रंतथावर्तिनदद्यातिस्वशक्तितः
८९ सजात्यंधोभवेन्नूनंभुक्त्वासर्वांतुयातनां आभावेसर्वथाकुर्यात्परदीपप्रबोधनं ९० विदधातिहरेःपूजांविनानैवेद्यमल्पधीःकुंभीपाकेम
हाघोरेपच्यतेनरकाग्निना ९१ अन्नंबहुविधंमस्यफलंनानाविधंतथा निवेदयतिविष्णवेब्रह्मभूयायकल्पते ९२ लोकवार्ताप्रसंगेनयःकु
र्याद्देवतार्चनं नतास्यसिमहाघोरेयमःपातयतिध्रुवं ९३ स्तोत्रपाठमृतेकुर्यान्निर्माल्यस्यविसर्जनं सचोन्मादीभवत्याशुनात्रकार्याविचारणा ९४
नीराजयतियोविष्णुंमाधवंकमलाप्रियं कोटिगुणंगतानानासेनाब्रह्महत्यायुतानिच ९५ पापान्यन्यानिचोग्राणितस्यदग्धान्यसंशयः मुखंनीराजनै
र्विष्णोःपश्यंतिपुरुषास्त्रियः ९६ नेधन्याःकृतिनोलोकेतेषांपुण्यमनंतकं कर्पूरस्यार्तिकांभक्त्याविष्णोर्यस्तुनिवेदयेत् ९७ ब्रह्मलोकंसमासा

द्युभुक्त्वाभोगान्मनोरमान् कोटिवारंसार्वभौमस्सर्वसंपत्समावृतः ९८ भूत्वापश्चाद्द्विजकुलेजन्मासाद्यमहायशाः ज्ञानविद्यासुनिष्णातोविष्णोः
सायुज्यमाप्नुयात् ९९ पूजांतेमाधवस्याग्रेसाष्टांगंप्रणमेद्यदि अश्वमेधसहस्रेषुसम्यक्चीर्णेषुयत्फलं १०० तत्फलंसमवाप्नोतिनात्रकार्या
विचारणा अपिधर्मसहस्राणितथाक्रतुशतानिच १०१ विष्णोर्दंडप्रणामस्यकलांनार्हंतिषोडशीं माघेमासिमहाविष्णोःकुर्याद्यदिप्रदक्षि
णां १०२ पदेपदेश्वमेधस्यफलमाप्नोत्यसंशयं यानिकानिचपापानिजन्मांतरकृतानिच १०३ तानितानिविनश्यंतिप्रदक्षिणपदेपदे तावत्पा
पभयंनृणांजन्ममृत्युजराभयं १०४ यावत्प्रदक्षिणांकर्तुंमनोयस्यनविद्यते नारीवापुरुषोवापिमार्जनेकेशवालये १०५ कृत्वागोचर्ममात्रं
वाविष्णुलोकेमहीयते बहिःश्चाभ्यंतरंविष्णोःपरिमार्जयतेगृहं १०६ सकोटिकुलमुद्धृत्यविष्णुलोकेमहीयते यःप्रोक्षतिचदेवस्यगृहंगोमय
वारिणा १०७ तस्यपापानिशांतानिमुक्तिःस्तस्यकरेस्थिता माघेमासिमहाविष्णोर्माधवस्यमहात्मनः १०८ गोमयेनोपलिप्येवगोसहस्रफलं
लभेत् यानारीरंगवल्लीभिःपंचरंगैर्हरेर्गृहं १०९ अलंकरोतिसद्भक्त्यातस्याःपुण्यफलंशृणु आजन्मशतपर्यंतंविधवात्वंनचाप्नुयात् १०
नापुत्राजायतेक्वापिनाधर्मेजायतेमतिः मातापित्रोःकुलंभर्तुःसमुद्धृत्यसुवासिनी १११ सर्वभोगसमायुक्ताविष्णुलोकेमहीयते अलंक
रोतिपूजायाःस्थलंदेवस्यचक्रिणः ११२ मृदाधातुविकारैर्वाशंखपद्मश्चस्वस्तिकैः तस्याःपुण्यफलंवक्तुंकःशक्तोदिविवाभुवि ११३
एवंस्नात्वामासमेकंसमभ्यर्च्यचमाधवं इमाःकथाःस्तथाश्रुत्वानगर्भेवसतिध्रुवं १४ स्नानंसंध्यादिकर्माणिपरित्यज्यहरेःकथा शृणोति
निभक्तिसंपन्नःकर्मपाशाद्विमुच्यते १५ खड्गंयथाशाणनिशानमुग्रंघोरैःप्रयुक्तंखलुहंतिशत्रून् एवंकथाशाणनिशातितंमनोहिनस्ति
कामांस्त्वरिषट्कवर्गान् १६ कथानिमित्तंयदिकर्मलोपोभवेज्जनेभागवतेन,लोके सकर्मलोपोनभवेन्मदीयेजनेविचार्यैवमनिंद्यकर्मी

कोटिस्तुतिस्त्र: कृपयामुनीनांसमाद्दिदेशात्मभुवोद्भवानां यूयंमदीयस्यजनस्यकर्मकृत्वानिशंपूरयितामुकल्पा: ११८ इत्यादिष्टाभगवतान्नृष

य:शंसितव्रता: सदाविष्णुकथासक्तंचेनसंभावितात्मना ११९ कर्मलोपंपूरयंतिकृत्वाकृत्वाप्यहर्निशं स्नात्वाविष्णुकथांश्रुत्वातथासंपूज्यमा

धवं १२० सर्वबंधविनिर्मुक्तोविष्णुसायुज्यमाप्नुयात् आदावंतेनथामध्येयथाशक्तियथारुचि १२१ माघवप्रतिमांदद्यात्व्रतस्यास्यसमाप्तये पंचा

शद्भाशतंवापिब्राह्मणान्भोजयेत्ततः १२२ एवंमाघेकृतस्नानोनभूयोजायतेभुवि स्नानपूजादिकंसर्वंसमाप्यमुनिपुंगव १२३ एतच्छास्त्रप्रवक्तारंयथा

विभवमर्चयेत् अपूजयित्वावक्तारंय:शृणोतिकथामिमां १२४ इहसुयंत्रेचिरंस्थित्वाभुवियातोहिजायते नशृणोतिकथायस्तुवाग्ममानामिमांद्वि

ज: १२५ अरण्येनिर्जलेदेशेभवतिब्रह्मराक्षस: धर्मशास्त्रप्रवक्तारंशांतंदांतंजिताहितं १२६ मिष्टान्नैर्भोजयेद्यस्तुसर्वपापै:प्रमुच्यते अनेनविधिना

यस्तुमाघस्नानंकरोतिय: १२७ तस्यपुण्यफलंवक्तुंविष्णुर्ब्रह्माशिवोयम:नेंद्रोनसूर्योवरुणोमन्वाद्या:किमुतापरे १२८ माघस्नानसमुद्दिश्य

वहिर्गच्छेद्यदानर: पदेपदेश्वमेधस्यफलंप्राप्नोत्यसंशय: १२९ अतीवप्रतिबंधाश्चनश्यंतिस्नानमात्रत: यथासुधर्मस्यसुतामुक्तबंधामुमो

दह १३० इतिश्रीवायुपुराणेमाघमाहात्म्येद्वितीयोध्याय: २ नारदउवाच कथंसुधर्मस्यसुताकर्मबंधान्मुमोचसा सकर्मबंध:कोवासीत्के

नासौनाशमागत: १ श्रोतुंकौतूहलंब्रह्मन्तस्माद्विस्तरतोवद ब्रह्मोवाच पुरागयस्यदौहित्र:सुधर्मानामबाहुज: २ कुंडिनेनगरेरम्येवेदभौंप्यभ

वत्तत: सुधर्मस्तनयांप्रादाद्राज्ञेमाहिष्मतीपते: ४ षष्ठेहनिविवाहस्यमृतोमाहिष्मतीपति: भर्तारंसाभाषयितुंप्रवृत्तारोचिष्मतीरतुमनातिकामं

५ शय्यागृहेसुतमभाषमाणांज्ञात्वामृतंसाथरुरोदचोच्चै: श्रुत्वासखीजनस्तस्या:प्रविश्यांत:पुरंमृतं ६ उपायैर्बहुभिर्ज्ञात्वारुरोदोच्चैरहर्निशं सं

आव्यतत्पितराक्रंदंतस्सखीभ्योनिवेदितं ७ सशोकानलसंतप्तोमूर्छामापमृतोपमां मूर्छितंतंनपतिंदृष्ट्वामानरश्चापमानर: ८ मूर्छामापुर्महा

दुःखादुःखदुःपरिवर्त्तिनः अकस्माद्‌गिरिनामयज्ञार्थेद्‌विजःप्रति ९ अभ्याशंनृपतेःप्रागाद्‌दृष्ट्वावस्थांतथागतां दयालुःसमुनिःप्राहनृपतिंशो
कलालसं १० ध्यात्वाचसुचिरंकालंज्ञात्वातन्मृत्युकारणं तंजीवयामिनृपतेमृतंजामातरंतव ११ नकालमृत्युरस्यास्तिमाशोकंकर्तुमर्हसि इ
त्याश्वास्यनृपंप्राज्ञःप्रादात्तस्यमृतस्यच १२ माघेमासिकृतंस्नानंदिनत्रयफलंमुनिः दिनस्यैकस्यचफलंजामातुःपर्यकल्पयत् १३ दिन
द्वयफलंतस्याःपश्चाज्जप्त्वामहामनुं मुंचामितेतिचकृत्वातंभूपमुदजीवयत् १४ ततःसुधर्मासंतुष्टःप्रत्युवाचगिरंसमुदा केनकर्मविपाके
नजामातामेमृतिंगतः १५ वैधव्यंदुहितुश्चापिकेनकर्मफलेनतु परिहृतोसिवैधव्यंदुहितुःकेनकर्मणा १६ पुनरुज्जीवितःकेनजामाताचा
द्यतद्धयं महाकौतूहलंश्रोतुमेतद्विस्तरतोवद १७ ऋषिरुवाच गौडदेशेपुराकश्चिद्वैश्योभूद्‌घननामकः तस्यैवदुहितावासीत्सुरूपानाम
रूपिणी १८ समानकुलगोत्रायवैश्यायादात्कन्यकांसकां अल्पकालेनकियतावयस्यासासुरूपिणी १९ भर्तरिप्रोषितेकंचिद्युवानंचर्मकारकं
वरयित्वाचोपपतिंरममाणाचिरंस्थिता २० अथकालांतरेपत्यौचागतेस्वैरचारिणी जारस्नेहाद्धतंभर्त्रीसहितंसादहन्निशि २१ जारेणसहिता
याषादेशेषुविचचारसा ततोमृतिंगतेकालेनरकेभुक्तयातना २२ वेश्याभूतकर्मशेषेणचतुर्दशसुजन्मसु अर्जितपुण्यमतुलंतयानुवेश्याजन्मनि
२३ तीर्थयात्राप्रसंगेनसुधर्मानामवैद्विजः रंगक्षेत्रेजिगमिषुरिमंदेशमुपागतः २४ स्थितेयमूर्मिलानामहैहयाधिपतेःपुरि द्वारस्थिताचसाया
न्हेकामुकानभिकांक्षती २५ दिनेतस्मिन्नेकमपिकामुकंमन्यपद्यत तस्मिन्रात्रौमहावृष्टिरभूदेकार्णवंजगत् २६ तदावृष्टिपरिक्लांतःसुमेधा
नामवैद्विजः द्वारिस्थशालावलभेरधोदेशेस्थितोमुनिः २७ त्रियामामनयद्विप्रोगीतापाठपरायणः सासर्वंश्रेष्ठयामासप्रायोयंब्राह्मणोभवेत् 
२८ द्विजश्चद्रुतमागच्छकामुकश्चेत्समाह्वय इत्यादृष्टानुसारतोगत्वाभाष्यागतापुनः २९ व्यवस्थितोद्विजःकश्चित्तीर्थयात्रापरायणः दृष्ट्वा 

सुपीडितस्तिष्ठत्कुड्यपार्श्वमुपाश्रितः ३० इतिदूतीवचः श्रुत्वादयामापचवैदेवतः तदर्थेस्वगृहंसम्यग्गोमयेनोपलिप्यच ३१ तत्रनिक्षिप्यसंभारा
न्नाम्रपात्राणिसासती दासीरूपंस्वयंधृत्वागत्वाविप्रमथाब्रवीत् ३२ ब्राह्मणानांगृहमिदंपांथानामुपकारकं असौगृहपतिस्तीर्थयात्रार्थीतैःस
हाययौ ३३ गच्छत्वामब्रवीद्विप्रोयेगच्छंत्यध्वगागृहं तेषांनदेहिवासार्थंस्थानंभोज्यफलादिकं ३४ तस्मादागच्छभद्रंवोगृहेविश्रामयस्वयं
वर्त्ततेद्यापिमहतीवृष्टिरध्वागतोमहान् ३५ तस्मादग्निंपरिसरमुस्वभोज्यफलादिकं इतितस्यावचःश्रुत्वाविप्रःशीतेनपीडितः ३६ ओमित्यु
क्त्वाततोगेहेतद्रात्रौन्यवसत्सुखं परिधानायसासौमंददौतात्कालिकंमुने: ३७ रंभाफलानिचूर्णकान्द्विजवर्यायसाददौ गीतापाठेनस्तोत्रा
णांपठनात्सोद्विजोनिशां ३८ तांनीत्वागाद्दिशंरौद्रींयत्रास्तिवरवाटिका तेनकर्मविपाकेनतत्पुत्रीत्वमागता ३९ पूर्वकर्मविपाकेनवाल्येवैधव्य
मागता अयंतस्याउपपतिर्जामाताहनवभूपतिः ४० सभुक्त्वायातनांघोरांभुविचांडालजन्मसु क्रमाद्दशसुचोत्पन्नोजन्मन्येकादशेततः ४१
लुब्धकोयंमहाक्रूरोमृगहिंसापरायणः कांतारेविपिनेघोरेमृगयांव्यचरद्भुवि ४२ ततोमध्यान्हवेलायांदेशेसौजलवर्जिते अध्वश्रांतंद्विजंकं
चित्क्षुत्तृषापरिपीडितं ४३ तंदृष्ट्वास्मिन्दयाजातालुब्धकस्यापिभाग्यतः इतएहीत्युवाचैनंमत्तोमाभैषिमाव्यथ ४४ भयादपित्रसन्सोक्लां
तोगच्छन्शनैःशनैः कस्माच्चरसित्वंभद्रवनेदुष्टमृगाकुले ४५ इतिब्रुवाणंतंप्राहतृषापीडितोप्यहं अंतिकंप्रागतःप्राहवटमूलेनिवे
श्यच ४६ नोपलभ्यंयदिजलंप्राणागच्छंतिमेधुना नात्रभोभ्रममाणेनदृष्टंक्वाप्यटवीपथे ४७ यद्यस्तिनयमांतत्रमापिचेदस्तितेकृपा इ
त्युक्तवांसंविप्रेंद्रंस्कंधेनादायसत्वर ४८ सरोवरंमनोरम्यंकमलोत्पलमंडितं नीलोत्पलैःकोकनदैःकल्हारैःपरिशोभितं ४९ वीचिभिर
तिशोभाढ्यंजलपक्षिभिरावृतं प्रापयामासविप्रेंद्रंसुतृट्क्लांतंसरोजलं ५० सपपौतज्जलंतस्मिन्भूरिवारिपपौचसः विश्रम्यादायविप्रा

यलुब्धकोदात्रसन्नधीः ५१ ततोगंतश्रमोविप्रआशीर्भिरभिनंद्यतं आमंत्र्यप्रययौधीमान्स्वदेशंद्विजसत्तमः ५२ तेनपुण्यप्रभावेनलुब्धकोष्ठंदिराडयं परस्त्रीसंगदोषेणगतासुरभवन्मुने ५३ भर्तुर्हननजंपापंपरपूरुषसंगजं दुहितेदुहितुःपापाद्धूयंतस्योपशांतये ५४ दिनद्वयकृतंस्नानंमाघेमासिमहीपते दत्तंपुण्यंततोभूपतस्मात्पापव्यपोहतु ५५ अशुभदुःखमापन्नावाल्यवैधव्यकारिणं परस्त्रीसंगजंपापंजामातृमृत्युकारणं ५६ अपमृत्युविनाशायस्नानमेकंकृतंदिने तेनपुण्यप्रभावेनपुनरुज्जीवितोनृप ५७ किंवर्णयामिमनुजेश्वरमाघमासविश्वेश्वरस्यकरुणांनृपपातितांवा किंवर्णयामिमनुजान्वहितानभिज्ञान्किंस्नानपुण्यफलमंवुजनाभवश्यं ५८ नक्षिश्यंतिनरालोकेमाघस्नानपरायणाः तस्माद्दुहित्राजामात्राकर्तव्यंस्नानमंजसा ५९ तेनपुण्यप्रभावेनदशवर्षसहस्रकं भुक्त्वेहभोगान्विपुलान्पुत्रपौत्रसमावृतौ ६० भविष्यतस्ततोमोक्षंदंपतीतौगमिष्यतः इतिसर्वसमाख्यातंश्वोयज्ञोभवितामम ६१ तदर्थंदक्षिणांदेहिगच्छाम्याश्रममंडलं इत्युक्तस्तोषयामासतंमुनिंशंसितव्रतं ६२ तेनानुज्ञामवाप्याथसुधर्मस्यापिनारद जगामस्वाश्रमपदंमंगिरानामवैऋषिः ६३ महेशोपिसिनौशंतौजामातादुहितातथा चक्रतुर्माघमासेतुप्रतिवर्षंतुदंपती ६४ स्नानंपूजांमहाविष्णोस्तयामाधवसंयुतः दशवर्षसहस्रंतुएतत्पुण्यप्रभावतः ६५ भुक्त्वानानाविधान्भोगानापतुर्मोक्षमव्ययं ६६ इतिश्रीवायुपुराणेमाघमाहात्म्येतृतीयोध्यायः ३ ॥ नारदउवाच तववागमृतंपीत्वातृप्तिर्नास्तिमहात्मनः विनाजडमतिंलोकश्रवणात्कोनुतृप्यति १ भूयोमाघस्यमाहात्म्यंतातविस्तरतोवद ब्रह्मोवाच शृणुनारदवक्ष्यामिमाघमाहात्म्यमुत्तमं २ यत्स्नात्वाजायतेशुद्धिर्मनसोमहदंहसः नार्यःपतिघ्न्योवालघ्न्यःस्वैरिण्यःक्रूरवृत्तयः ३ मातापित्रोर्विघातिन्योगरदालोकगर्हिताः पुरुषाःपापिनोघोराःसर्वेकर्मवहिष्कृताः ४ माघस्नानाद्विमुक्ताःस्युर्नात्रकार्याविचारणा तत्पापेना

स्त्रिलोकेस्मिन्माघेनापहृतं कलौ ५ हत्वापापसहस्राणि न पापैर्लिप्यते जनः जलेयथानिमग्नानि पद्मपत्राणि चांभसा ६ माघस्नानं समु
द्दिश्य ये गच्छन्ति बहिर्जलं पदे पदेऽश्वमेधस्य प्राप्नुवन्ति फलं ध्रुवं ७ माघमासि मुनिश्रेष्ठ यो जलस्पर्शमाचरेत् जलस्पर्शनमात्रेण मुच्यते सर्वकिल्बिषैः
८ यो गृहे माघमासे तु स्नानकर्म समाचरेत् स्नानमूत्रेण तद्धि घान्नात्र कार्या विचारणा ९ सर्वाण्यपि च पापानि त्रैलोक्यान्तर्गतानि च गेहस्थं जल
माश्रित्य वसन्त्या श्रयकांक्षया १० माघे मासि सुरश्रेष्ठ यः स्नायादुष्णवारिणा वन्हिराशौ महाघोरे पतत्याशु न संशयः ११ यो माघे माधवं देवं पयसा
स्नापयेद्यदि स कोटिकुलमुद्धृत्य विष्णुलोके महीयते १२ घृतेन स्नापयेद्यस्तु गव्येनासुरघातिनं वैकुंठे मोदते नित्यं दशपूर्वैर्दशापरैः १३ पंचग
व्येन देवेशं स्नापितं केशवं हरिं सजीवन्नेव मुक्तः स्यान्नास्य क्वापि पुनर्भवः १४ शालग्रामशिलापूजां माघे मासि करोति यः वांछन्ति कर संस्पर्श
नस्य देवाः सवासवाः १५ शालग्रामशिला यस्मिन्गृहे तिष्ठति नारद अपि पापशतैर्युक्तं यमस्तं नेक्षितुं क्षमः १६ ये माघस्नानरहिता माधवार्ची
विवर्जिताः येषां धर्मे रतिर्नैव तेषां स्वामी यमः स्वयं १७ रोगाः पिशाचा यक्षाद्या माघस्नानविवर्जितं ग्रहाश्च पीडयन्त्येनं यमः पश्चाच्च शिक्षति १८
नार्यो वा पुरुषो वापि कुसुमैर्गंधलेपनैः मासि माघे माधवं च पूजितं पाविनं कलं १९ शंखोदकेन देवेशं स्नापयेन्माधवं यदि कल्पकोटिसहस्राणि
मोदते विष्णुमंदिरे २० शंखमध्ये स्थितं तोयं भ्रामितं केशवोपरि अयत्नतं मनुष्याणां ब्रह्महत्यां व्यपोहति २१ पीठस्थः पूजितः शंखो यत्र तिष्ठति
नारद प्रयागसदृशं क्षेत्रं तद्देहं प्राह केशवः २२ यद्गेहे केशवस्याग्रे पूजितोब्धिसमुद्भवः गेनेष्टास कलायज्ञास्तेन सर्वमनुष्ठितं २३ यन्मूले सर्ववेदा
श्च यन्मध्ये सर्वदेवताः यदग्रे सर्वतीर्थानि तस्मात्शंखं तु पूजयेत् २४ संप्राप्ते पातके घोरे प्रायश्चित्तविवर्जिते मूर्ध्नि शंखोदकं धार्यमिति प्राह मनी
षिणः २५ मा काशीं मा गयां गंगां मा कांचीं मा च पुष्करं मा केदारं द्वारकां च मा नदीं मा च मानसं २६ ते सर्वे सेविता यत्र शालग्रामशिलोदके ग

गाद्याः सरितः सर्वाः सागराः सप्तनारद २७ शालग्राम शिलातीर्थकलांनार्हंतिषोडशीं माघमासे द्विजश्रेष्ठ शालग्राम शिलोदकात् २८ शिरःप्र
क्षालयेद्यस्तु तस्य पुण्यफलं शृणु जन्मकोटिसहस्रेषु जन्मकोटिशतेषु च २९ गंगादि दिव्यतीर्थेषु स्नातो भवति नारद आजन्म कृतपापानि जन्मां
तरकृतानि च ३० शालग्रामोदकं मूर्ध्नि भस्मसाद्यान्ति विभ्रतः भोजनानंतरं यस्तु शालग्राम शिलोदकं ३१ पीत्वा पुण्यमवाप्नोति चांद्रायणशताधिकं
शालग्रामार्पितां यस्तु तुलसीं भक्षयेद्यदि ३२ तेन भुक्तं पंचगव्यं कोटिवारं न संशयः माघमासे तु विप्रेंद्र यः कुर्यात्पत्रभोजनं ३३ ब्रह्मलोकं समासाद्य
मोदते ब्रह्मवत्चिरं यः कुर्यान्माघमासे तु ब्रह्मपत्रे तु भोजनं ३४ सोश्वमेधफलं याति विष्णुलोकं च विंदति ब्रह्मपत्रे तु भुंजानो नरकं नैव गच्छति
३५ प्रातः स्नानं पूजनं माधवस्य गीतापाठो वैष्णवानां च पूजा शास्त्राभ्यासो भोजनं ब्रह्मपत्रे मायाभर्तुर्मूर्तिदानं च कुर्यात् ३६ सर्वेषामपि वर्णानामा
श्रमाणां च नारद स्त्रीणां च हीनजातीनामेष धर्मः सनातनः ३७ प्रातःस्नाने माधवस्यार्चने न येषां बुद्धिर्जायते सत्कथासु तेषां लोकाद्युक्षयाः क
मलभ्याः स्तेषां वंशः स्थापितो विष्णुलोके ३८ ये पुण्यहीना मनुजाश्च पूर्वे न शिक्षिता ये गुरुभिर्विशिष्टैः तेषां प्रीतिर्माधवे माघमासे न जायते क्वापि
कुतोन्यधर्मे ३९ यः कांस्य भुग्भवेन्माघे स जंबूको भवेद्ध्रुवं तस्मात्कांस्येन भोक्तव्यं माघमासि द्विजोत्तम ४० तैलाभ्यंगं तैलभोगं माघमासे तु वर्जये
त् तैलाभ्यंगे कृते विप्र वज्रदंष्ट्रो भवत्यलं ४१ शृगालो जायते भूयो माघे वै तैलभोजनात् आरनालं च पिण्याकं यो माघे मासि भक्षयेत् ४२ सुरापे
नगतं लोकं स तु गच्छति निश्चयं लशुनं गृंजनं छत्रं टंकनां कं भिस्सटं तथा ४३ उपोदकी मलांवुं च माघे मासि विवर्जयेत् अतसी पत्र शाकं तु यो माघे
मासि भक्षयेत् ४४ तस्यापराधसाहस्रं क्षमते विष्णुरव्ययः माधवं मुनिपुष्पैस्तु यः पूजयति मानवः ४५ तेन वर्षशतं विष्णुः पूजितः स्यान्न संशयः
यः पूजयति देवेशं शतपत्रैर्मनोरमैः ४६ विमानं पुष्पमारुह्य स्वर्गलोके महीयते यो धात्रीफलमालाभिर्माधवं परिपूजयेत् ४७ तस्य पुत्रान्महा

प्राप्तान्स्वयंयच्छतिमाधवः योधात्रीफलगैर्दीपैर्नीराजयतिमाधवं ४८ मुच्यतेनात्रसंदेहोमहापातककोटिभिः आलिप्यधात्रीपिष्टे
नयःस्नानंकर्तुमिच्छति ४९ तावन्मात्रेणमुच्यंतेनराःपातककिल्बिषैः योधात्रीफलराशिंतुब्राह्मणायप्रयच्छति ५० सुपुत्रान्पापहानिंच
लभतेनात्रसंशयः धात्रीफलानियोमर्त्योब्राह्मणेभ्योविसर्जयेत् ५१ नतस्यसंततेर्हानिर्भुक्तिंमुक्तिंचविंदति योमाघेमासिसप्तम्यांशुक्लायांरविवा
सरे ५२ कूष्मांडंतिलगर्भाक्तंब्राह्मणायप्रयच्छति कूष्मांडंबहुबीजाढ्यंब्रह्मणानिर्मितंपुरा ५३ तस्मादस्यप्रदानेनसंततिर्वर्धतांमम इतिमंत्रेणास्य
फलंसंततिःशतपौरुषी ५४ वर्धतेनात्रसंदेहःक्रियावश्यमयंविधिः माघेतुशुक्लसप्तम्यांकूष्मांडस्यप्रदानतः ५५ नच्छित्तिःसंततेस्तस्यसकूष्मां
डोभवेद्भुवि पुराभगैस्तपःकुर्वन्नभोषपितृदेवताः ५६ स्थितोहंतपसेब्रह्माशुश्रूषात्रविधीयतां इत्युक्तंब्रह्मणातेनप्रत्यूचुःपितृदेवताः ५७ वयंमोक्षा
यतपसाहरेराराधनोद्यमाः अतोस्माभिस्तुशुश्रूषानशक्याचरितुंनव ५८ इत्युक्तेपितृभिःसोपिशशापातीवकोपतः संतत्यावोभवेन्मोक्षोनस्नातं
श्चात्कदाचन ५९ अभावेसंततेर्यूयमधःपततसान्वगाः दत्तेशापेकंजजेनसाध्वसंतमयाचयन् ६० वंश्यैःकृतेनदोषेणाविच्छित्तिःसंततेर्भवे
त् दयालोगतिमस्माकंत्वंतस्माद्दसत्वरं ६१ एवंविज्ञापितोब्रह्माप्रत्युवाचपितॄनथ नानृतंमेवचोभूयात्कथयेगतिमन्यथा ६२ कूष्मांडस्य
सप्तम्यांयोददातिद्विजातये ननस्यसंततिच्छेदोभवेदितिवरंददौ ६३ कूष्मांडानामदानेनविच्छित्तिःस्याच्चसंततेः इत्यास्थास्यपितॄन्देवान्ब्रह्मा
लोकपितामहः ६४ तेषामर्थेचकूष्मांडदानार्थमसृजद्विभुः प्रवालमुक्तासहितंगोघृतेनविलेपितं ६५ सदक्षिणंसतांबूलंदेयंसंततिमिच्छता
अदानेस्यसप्तम्यांकूष्मांडस्यद्विजातये ६६ ब्रह्मशापेनसंतत्याविच्छेदोभवतिध्रुवं मकरसंक्रमणेभानोसप्तम्यांचद्विजातये ६७ मातुलिंगानियोद
द्यात्पुत्रान्भाग्यवतान्लभेत् अदानमन्नंतपस्तुमासमेनंव्यतिक्रमेत् ६८ सजीवन्नेवचांडालोपश्चाद्रौरवमश्नुते अस्नात्वाचाप्यदत्वाचमासमेनं

नयेद्यदि ६९ स्वर्गस्थैः पितृभिः सार्द्धं रौरवं कल्पमश्नुते मासि माघे माधवाय यः कुर्यात्पुष्पमंडपं ७० श्वेतद्वीपे वसेन्नित्यं दशपूर्वैर्दशापरैः य
श्चूतपल्लवैर्विष्णोस्तोरणं विदधाति सः ७१ नपालोकं कुलशतैर्युक्तो सो गच्छति ध्रुवं यः कुर्यात्कदलीस्तंभैर्मंडपं चरमापतेः ७२ कमलाकान्त
लोकं च पितृभिः सह गच्छति करोत्यभ्यंजनं विष्णोस्तैलैश्चंदनगंधिभिः ७३ तस्य पुण्यफलं वक्तुं नालं वर्षशतैरपि वासोदानं तु यः कुर्याच्छ्री
तार्तीयद्विजातये ७४ सार्वभौमो भवत्येष कोटिजन्मसु नारद अन्नदानं तु यः कुर्याच्छ्रोत्रियाय कुटुंबिने ७५ अन्नवान्जायते कामी निःकामो
मोक्षमाप्नुयात् मिष्टान्नं भोजयेद्यस्तु व्याकुर्वीणां हरेः कथा ७६ न तस्य लोकाः क्षीयन्ते कल्पकोटिशतैरपि तं पूजयित्वा धनवस्त्रदानैर्गोभू
जाद्यैरपि विष्णुबुद्ध्या ७७ भुक्त्वा च भोगान्सकलं प्रयाति पदं हरेर्वैदुरापमन्यैः अपूजयित्वा गुरुमग्रबुध्या धर्मप्रवक्तारमनन्तबुद्ध्या ७८ छित्वा च
कर्णौ रविसूनुरस्य तं पातयत्यंधतमस्यपारे यो निंदयत्यमुं मूढः परोक्षं तां शृणोति वा ७९ वासोऽस्याधेनमस्मिंस्तु निष्कृतिर्नैव विद्यते ८० इति श्री
वायुपुराणे माघमाहात्म्ये चतुर्थोध्यायः ४ ब्रह्मोवाच माघस्नानस्य माहात्म्यं कथितं विष्णुना पुरा महालक्ष्म्यै सिंधुतीरे मह्यं सा च समब्रवीत् १
ब्रह्महत्यापीडिताय इंद्राया वोचमंगज ततः परं न कस्यापि गोप्यत्वान्नोदितं त्विदं २ शुश्रूषवे च पुत्राय श्रद्दधानाय धीमते वक्ष्यामि परमं गु
ह्यं माघमाहात्म्यमुत्तमं ३ माघे मासि सकृत्स्नात्वा तथा संपूज्य माधवं दत्वान्नं द्विजवर्याय कृतकृत्यो भवेन्नरः ४ यो वदेन्माघमाहात्म्यं वाच्य
मानं शृणोति यः दुर्योनिहेतुपापेन मुच्यते गुह्यको यथा ५ नारद उवाच को नाम गुह्यको ब्रह्मन्दुर्योनिः केन कर्मणा तस्मिन्योनौ कथमभू
त्कुत्रासीत्केन संगमः ६ ब्रह्मोवाच गुह्यकः श्वेतनामाभूद्दलकाद्वारपालकः कदाचिद्धिमवत्पृष्ठे रंतुकामो प्सरोगणैः ७ संवृतो मदिरां
पीत्वा पयोगंगातटे शुभे वने मनोहरे दिव्ये मत्तकोकिलकूजिते ८ वीचिविक्षोभसंभिन्नपृषद्भिः शीतवायुना विकसत्कंजमुकुलैः स

वेदाशोभितेशुभे ९ लताकुटीरकुसुमैरसमत्तालिमंडिते लताकुडमलसंभिन्नतमालहरितांतरे १० तयाविलंविशालाख्यालसत्तुष्या
धिवासिते रम्यपुलिनपर्यंकेरेमेरामाभिरावृतः ११ नकिंचिज्ञातवांश्रेनोदेशकालादिकंतथा तदाश्चरोमशोनामकैलासादागतोमुनिः
१२ तंदृष्ट्वामदिरामत्तोविवस्त्रमनयासह नोत्तस्थौमुनिशार्दूलप्रजहासचतंमुनिं १३ तदासक्रोपदृत्ताक्षोरोमशस्तंशशापह मत्तस्त्वंनोत्थि
तोयस्माद्भवव्यालोद्रिकंदरे १४ इतिशप्तोमुनींद्रेणप्रार्थयामाससत्वरं त्वयाह्यनुगृहीतोस्मिनमनोदंडइसह १५ उपकारायहिखलुशिशो
मीनुश्वतर्जनं कृपांकुरुकृपालोत्वंदीनेमदगतेपिवा १६ धान्यनामग्निसंस्कारोयावदामलशोधनं इतिप्रसादितस्तेनविशापमददात्तदा १७
वामदेवस्यशिष्योयोव्याकुर्वीरणांकथामिमां यदाश्रोष्यसिमाघस्यतदामोक्षमवाप्स्यसि १८ इतिदत्वाविशापंचययौवदरिकाश्रमं श्वेतस्तु
ब्रह्मदंडेनत्रिकूटाद्रिकंदरे १९ व्यालोभूद्योजनायामशरीरोनिलभोजनः सोवात्सीद्वर्षसाहस्रंपशुपक्षिमृगाशनः २० तस्मिन्नेवकालेतु
वामदेवोमहामुनिः सेतुंद्रष्टुंमुनिगणैःपरीतोद्रिमनुपयौ २१ व्यालाधिष्ठितगुहाद्वारिस्थवटपादपे नीत्वारात्रिंबहुविधैःकथालापैःसुखा
वहैः २२ ततोभगोंदयेजातेप्रयाणायोद्यतेमुनौ तदाप्रातर्विनोनाममुनयःशंसितव्रताः २३ त्रिकूटाग्रेदेवखातेमाघेमास्युदितेरवौ स्नात्वा
निस्वाश्रमंगंतुमभ्यादवतरस्मरणात् २४ गतास्तदाद्रिवस्त्राणामपतत्तुरविंदवः वटस्याग्रेस्थितोदेवःवटोपिन्यपतद्भुवि २५ उत्तस्थौपुरुषस्त
स्मात्तदैवाद्भुतदर्शनः तंदृष्ट्वावामदेवस्तुविस्मितोवाक्यमब्रवीत् २६ कोयंकस्मादयंभावोमुक्तिःकस्मादहेतु कीचिंताकुलेमुनिगणेगोतम
स्यतनूद्भवे २७ इतिश्रुत्वावामदेवात्सोयमद्भुतपूरुषः प्रणम्यशिरसातंसवामदेवमथाब्रवीत् २८ मार्कंडेयस्यशिष्योहंसुतपानामवैऋषिः
समित्कुशफलार्थीदमरण्यंगुरुचोदितः २९ अगमत्तत्रतत्पुत्रीनाम्नागुणवतीसती चरंतीकंदुकक्रीडांव्याजात्तासमुपागता ३० गांधर्वे

मा०वै० णविवाहेनभद्रंतुमनाअहं आहसारोषतास्मासीकिंनजानासिमूढधीः ३१ शिष्यत्वान्मेपितुर्भ्रातःकथंवाकांक्षसेनुजां अत्यज्ञोभवद्दुर्बुद्धे
१० रोभूस्त्वांवनेबुध ३२ शशापमांगुरुःसुतांतेनाहंवरनागतः नजानेकर्मणाकेनजडजन्मगतंमम ३३ एतत्कुतूहलंश्रोतुंकारणंवक्तुमर्हसि गुरु
तल्पगपापंयत्कल्पकोटिशतैरपि ३४ नतस्यक्षीयतेयस्मादिदानींभस्मसाद्ययौ तद्धर्मसूक्ष्मंवदवामदेवकरोमिभूयोप्यचिरेणपुण्यं ३५ से
मायलोकस्यभवत्प्रचारोनिष्कामुकानामिहनास्तिकृत्यं श्रुत्वानहुषवचनंवामदेवोध्यानपरायणः ३६ ज्ञात्वातत्कारणंसम्यक्विस्मितोवाक्यम
ब्रवीत् शतर्चिनोनामपुराभवोयोगिरींद्रशृंगेद्रुतदेवखाते ३७ माघेचमासेकृतसर्वकृत्यमथागतास्वाश्रममाशुरोजसा तदार्द्रवस्त्राञ्जलिनो
दबिंदुभिः सिक्तोवयोयंनवपूर्वरूपं ३८ प्रातर्जलस्पर्शनपुण्यलेशाद्धिगतस्तेजडजन्मसाधकः हत्यायुतंशापमहस्रमुग्रंगुर्वंगनाकोटि
निषेवणंच ३९ तथान्यदोषाणिचमाघमासेस्नानेननश्यंतिसमूलघातं नपापवृद्धिर्नचकर्मबंधोनवाक्ययोनिर्नपिशाचदेहः ४० नान्य-
कीसोमानिलबंधलेशोप्रातर्जलस्पर्शनमात्रतोगंजिद्धानवेत्तियदिमाधवनामधेयंचेतश्चनस्मरतिमाधवपादपंकजं ४१ प्रातनरैर्यैनचमा
घमासेस्नानंकृतंतस्यहिकर्मबंधः अस्मात्सहागतानांतेमुनीनांचसमागमात् ४२ प्रातर्माघेजलस्पर्शोभाग्यदःसुसमागमः सर्वदानेषुय
त्पुण्यंसर्वतीर्थेषुयत्फलं ४३ तत्फलंसमवाप्नोतिमाघस्नानेनपंडितः तादृक्पापंनास्तिलोकेयन्नपापंनगच्छति ४४ तस्मान्माघकृतस्ना
नःसुखीभवचिरंमुने इतिश्रुत्वावामदेवभाषितंसुतपामुनिः ४५ भूयोभूयोनमस्कृत्वातथामंत्र्ययौवनं श्रुत्वामाघस्यमाहात्म्यंवामदेव
मुखेरितं ४६ तथैववल्मालोनिर्मुक्तःकयोनेर्दुःखकारणात् तदैवाद्भुतरूपोभूच्छतोनामसगुह्यकः ४७ वामदेवंनमस्कृत्यहृष्टांतंसमवोचत राम.
कृतप्रश्नाद्वामदेवाद्धर्षोत्फुल्लविलोचनः ४८ अनुज्ञातोविमानेनगतोसावलकापुरीं वामदेवोपिमाघस्यमाहात्म्यंप्रशशंसह ४९ शिष्यमः १०

सानुगेभ्यश्चदस्त्विरणशांततोययौ तदेतन्माघमाहात्म्यंकथितंतवपुत्रक ५० अनंतंतस्यमाहात्म्यंलेशोयंकथितोमया साकल्येनमया
वक्तुंनालंवर्षशतैरपि ५१ नक्षत्राणिचगणंयंतेगणंयंतेचपक्षणादयः नरेणयेनवालोकेतेनेदंगणयनेमुने ५२ यथामुरारिःसर्वेषुदेवेषुश्रेष्ठ
श्रेमतः तथासर्वेषुधर्मेषुमाघधर्मोविशिष्यते ५३ सुखोपायोमहापुण्यफलदःपापनाशनः तस्मान्माघसमोधर्मोनभूतोनभविष्यति ५४
इंद्राद्यालोकपालाश्चदिलीपाद्यामहीभृतः माघमासस्यमाहात्म्याद्ययुःसिद्धिंपरात्परां ५५ देवतानामृषीणांचमाघस्नानमभीप्सितं संसारे
क्लिश्यमानानांमनुष्याणांचकाकथा ५६ अहोमाधवनामास्तिमाघस्नानमलापहं तथापिमनुजालोकेक्लिश्यंतीत्येतदद्भुतं ५७ स्वा
धीनएवदेहस्तुनकस्यापिवशेजलं मासोयंस्वयमभ्येतितथाप्येतेजडाअहो ५८ यदान्नदेहोस्तियदाद्विजत्वंयदाचपट्वीकरणप्रवृत्तिः
तदैवनैजंपदमीक्षितव्यंकदामृतिंत्वेनिजनोनवेति ६० वृथाजन्ममनुष्याणामनाराधयतांहरिं मजस्यपुरुषस्येवसर्वालंकारमंडनं ६१
सर्ववेदाःसर्वधर्माश्चलोकेसर्वाणितीर्थानिचयानिलोके दानानियज्ञाश्चतथैवतेषांयेषानचेद्भक्तिरनंतवाहो ६२ प्रायश्चित्तानिचीर्णा
निश्रुतिस्मृत्युदितानिच सहस्रनामपठनंनाल्पस्यतपसःफलं ६३ नित्यंसहस्रनामोत्थंश्लोकार्द्धंश्लोकमेववा प्रातर्माघेपठित्वातुविष्णोः
सायुज्यमाप्नुयात् ६४ स्नात्वाप्रातर्माघमासेसंपूज्यजगदीश्वरं श्रुत्वाभागवतंशास्त्रंविष्णोःसायुज्यमाप्नुयात् ६५ श्लोकार्द्धंश्लोकपादंवा
नित्यंभागवतोद्भवं पठित्वामोक्षमाप्नोतिनात्रकार्याविचारणा ६६ इतिश्रीवायुपुराणेमाघमाहात्म्येपंचमोध्यायः ५ ॥ नारदउवाच ॥
स्नानस्यमाघमासेपिशक्तायास्तिथयोग्रहाः स्थानानियानिशस्तानिकार्याण्यपिव्रतानिच १ वदविस्तरतोब्रह्मन्सदन्यद्यपिरोचते ब्रह्मो
वाच यथागंगासर्वदेशेषुपूज्यायथाविष्णुःसर्वदेशेविभुश्च २ गंगाख्यातास्थानयोरुत्कटापिकाश्यांत्रिवेण्यांखलुपूज्यतेसौ व्याप्नोतिमा

गवान्विष्णुस्तुलसीकाननेशुभे ३ अश्वेषुगविविप्रेषु यथासन्निहितःसदा तथामाघस्यतीर्थेषु प्राशस्त्यंकथ्यतेमया ४ स्थानानामिहसर्वे
षांव्रतानामिहनारद द्वादशीसर्वतःशस्तातीर्थेभ्योविष्णुवल्लभा ५ तस्यास्नानादिकंसर्वंकोटिकोटिगुणंभवेत् उपरागसहस्राणिव्यती
पातशतानिच ६ अमावास्यांतुद्वादश्याःकलांनार्हंतिषोडशीं द्वादश्यांमाघमासस्यपयसाशंखवर्तिना ७ संस्नाप्यमाधवंदेवंविष्णुलोकेम
हीयते योमाघशुक्लद्वादश्यांशुद्धःपंचामृतैर्हरिं ८ स्नापयन्यातिसायुज्यंनात्रकार्याविचारणा सकृद्धुतेनसंस्नाप्यमाघेमाधवमव्ययं ९ द्वाद
श्यांप्रतिपूर्णायुःपरत्रचपरांगतिं द्वादश्यांभोजयेद्यस्तुशुद्धंभागवतंद्विजं १० कृतंब्राह्मणसाहस्रभोजनंनात्रसंशयः देवान्विष्णुंसमुद्दिश्य
ब्राह्मणंभोजयेद्यदि ११ माघस्यशुक्लद्वादश्यांदेवानामनृणीभवेत् तथैवासितद्वादश्यांपितॄनुद्दिश्यनारद १२ ब्राह्मणान्भोजयेद्यस्तुसमु
क्तःपैतृकादृणात् योभानुवारेमाघस्यभोजयेद्वेदपारगं १३ ऋषीणांऋणतोमुक्तोनात्रकार्याविचारणा यद्दानंक्रियतेमाघेद्वादश्यांतु
विपश्चितैः १४ तद्दानंकोटिगुणितंभवत्येवनसंशयः द्वादशीरविवारेणसंक्रमेणाचयुज्यते १५ सातिथिःपुष्कलानामक्रतुकोटिशताधिका
द्वादशीभानुवारेणव्यतीपातेनसंयुता १६ सातिथिःशृंखलानामतीर्थयात्राफलप्रदा द्वादशीशनिवारेणश्रवणेनचसंयुता १७ सातिथिर्वै
स्मवीनामप्रमोदेनदुर्लभाकलौ शस्त्राज्जलाद्द्विषात्सर्पाच्चांडालात्पुल्कसादपि १८ इत्यादिहेतुभिर्लोकेदुर्मृतिंयेगतानराः तेषांगतिविहीनानां
द्वादश्यांविप्रभोजनं १९ माघमासिद्विजश्रेष्ठगतिरुक्तामनीषिभिः येचलोकेलुप्तपिंडाःक्रियालोपगताश्चये २० तेषांवंशेचकेनापिद्वाद
शीभोजनेकृते माघेमासिगतिस्तेषांभवत्येवनसंशयः २१ असंस्कृतप्रमीतानांत्यागिनांचकुलस्त्रियां पतितानांमाघमासेद्वादशीभोजने
गतिः २२ नद्वादशीसमदिनंनभूतंनभविष्यति माघसंदुक्षयेभानोस्नानदानादिकाःक्रियाः २३ पितॄनुद्दिश्यकुर्वंतिकृतकृत्याःकलौयुगे॥

अमासोमेनभौमेनरविणागुरुणानथा २४ संयोगःपद्मकोनामशशिग्रहशताधिकः सयोगोमाघमासेचकोटिंदुग्रहसंमितः २५ माघेसंयुक्तगु
रुणापौर्णिमायुज्यतेयदि संयोगःपौंड्रकोनामकलौसंतानदोमतः २६ योमघायुक्तपौर्णिमास्यांगुरुणाचमुनीश्वर प्रतिमांशिशुमारस्यसर्वि
तांयोददातिच २७ मृतापत्याख्यदोषेणमुच्यतेनात्रसंशयः नमःसर्वग्रहाधारलोकानुग्रहकारक २८ नवदानेनमेभूयान्मृतसंतानिनिःष्कृ
तिः इतिदद्यात्प्रयत्नेननान्यथेदंभविष्यति २९ पौर्णिमायांमाघमासस्यनस्नायाद्योवहिर्जले शूद्रःपिशाचतामेतिब्राह्मणोब्रह्मराक्षसः ३० अ
माघंयोनयेत्लोभादालस्याद्वामुनीश्वर अकृत्वामाघमासंतुस्नानदानादिकाःक्रियाः ३१ माघ्यांस्नानंसकृत्कृत्वासंपूर्णफलमश्नुते योमातु
लिंगंप्रददातिमाघ्यामुद्दिश्यमाधवमादिदेहतु ३२ सत्कीर्तिमंतंतनयंप्रसूतेयथार्जुनंहैहयदेशराजा यःपौर्णिमास्यांपितृभ्योगुडंचददातिगोव
त्सयुतांद्विजाय ३३ सप्तमसंख्याककुलानिविष्णोर्लोकेपिसंस्थाप्यस्वयंमुदास्ते नीलंवृषंपिंगलवापिमाघ्यांपितॄन्समुद्दिश्ययुवानमग्र्यं ३४
शूलादिकंसन्नुनोत्सर्जयित्वागयाश्राद्धंकोटिवारंकृतंस्यात् स्नानान्नमाघ्यांवृषोत्सर्गंकृत्वाशृंजनादपि ३५ जीवतोवाक्यकरणात्त्रयंचभिः
पुत्रतामियात् अनपत्योवृषोत्सर्गंकृत्वाद्यादियथाविधि ३६ दीर्घायुषंसुपुत्रंचसप्राप्नोत्यब्रवीद्धरिः वृषोत्सर्गसमंपुण्यमितिप्राहजनार्दनः
३७ वृषोत्सर्गसमंलोकेकर्मग्रंथिनिकृंतनं नदृष्टंनश्रुतंक्वापिऋणत्रयविमोचकं ३८ माघ्यांपितॄन्समुद्दिश्ययोनीलंवृषमुत्सृजेत् गयाश्रा
द्धंकृतंतेनकोटिवारंनसंशयः ३९ गयाश्राद्धंवृषोत्सर्गःसममाहुर्मनीषिणः सचेन्माघ्यांकोटिगुणमितिप्राहजनार्दनः ४० माघेशुक्लत्रयोद
श्यांफलराशिविमोक्षणं नस्यवैसंततेर्हानिरकालंनैवजायते ४१ योषिन्माघेत्रयोदश्यांसनिशातालपत्रकं सांजनंसफलंशूर्पंयुग्मंका
यासंयुतं ४२ यावज्जीवन्त्यतिपुत्रादद्यात्संपूज्यनासती ननस्याःकंठसूत्रस्यहानिःक्वापिनजायते ४३ माघेमासिचतुर्दश्यांयोपूपान्कृत्वा

संपुतान् दद्याद्द्विजातये भक्त्या ज्ञानं मोक्षं च विंदति ४४ माघे तु रथसप्तम्यां नारी श्रेष्ठफलेप्सुका उत्थाय पश्चिमे यामे स्नात्वा धौतांबरा सती
४५ रथमालिख्य सवितुर्गोमयेनापि च रथमध्ये वा शरदलपद्ममालिख्य धातुना ४६ सूर्यमंडलगं विष्णुं तत्र पद्मे प्रपूजयेत् रक्तैः पुष्पैः रक्त
मात्यैः रक्तचंदनवाससा ४७ गुग्गुलेन च धूपेन पायसस्योपहारतः तांबूलं च ततो दद्यान्निद्रां कुर्यात्ततः परं ४८ सूर्यमंडलगो विष्णुः स्वप्ने वक्ति
हिताहितं ददाति स्थानं तथा कामान्नान्यथेदं कदाचिद्भवेत् ४९ स्नात्वा तु रथसप्तम्यां दद्यात्कूष्मांडमुत्तमं नारी सुतमवाप्नोति नरो हत्यां व्यपो
हति ५० द्विजेंद्रं रथसप्तम्यां पायसं भोजयेद्यदि ग्रहपीडादिभिः सर्वैर्मुच्यते नात्र संशयः ५१ यो दद्याद्रथसप्तम्यां तिलपात्रं द्विजातये वि
मुक्तः सर्वपापेभ्यो ग्रहपीडां व्यपोहति ५२ यः कुर्याद्रथसप्तम्यां हिरण्यश्राद्धमंजसा प्रीणंति पितरः सर्वे नैकं त्वन्यत्कदाचन ५३ पितॄनुद्दि
श्य यो दद्यादन्नश्राद्धं तथा दिने तदन्नं मेरुणा तुल्यं तेषां भवति निश्चितं ५४ यो माघे रथसप्तम्यां भूमिदानं करोति च स कोटिकल्पपर्यंतं वि
ष्णुलोके महीयते ५५ राजसूयाश्वमेधाभ्यामात्मलोको हि सीयते सीयते रथसप्तम्यां गोदानाद्धेनवे क्वचित् ५६ यो माघे रथसप्तम्यां
दद्यादन्नं द्विजातये तदन्नं कोटिगुणितं भवत्येव न संशयः ५७ चंतसीपुष्पमालेन सप्तम्यामर्चयेद्धरिं भस्मसाद्याति पापानि इंधनानीव
वह्निना ५८ चतस्रस्तिथयो गोप्या दुर्लभास्त्वकृतात्मनां द्वादशी सप्तमी पूर्णा तथा शुद्धा त्रयोदशी ५९ भुक्त्वा द्विवारं सप्तम्यां माघस्याद्य
यसौ ध्रुवं अहुत्वा चाप्यदत्वा च यस्य गच्छति सप्तमी ६० स तु चांडालतामेति शतजन्मसु निश्चितं अस्नात्वा चाप्यदत्वा च माघमासो ग
तो यदि ६१ पापं नो नश्यते भूयः कल्पकोटिशतैरपि माघे तु रथसप्तम्यां गुप्तदानं करोति यः ६२ तस्य विष्णुः स्वयं दाता जागरूको भवत्य
लं एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत् ६३ माघे च रथसप्तम्यां दानं दद्याद्द्विजातये वांछां कुर्वंति पितरस्त्कोप्यस्मत्कुले त्विति ६५ इ

तिश्रीवायुपुराणेमाघमाहात्म्येषष्ठोध्यायः ६ ब्रह्मोवाच माघस्नानंप्रयागेतुप्रशंसंतिमनीषिणः तुलास्नानंतुकावेर्यांप्रशस्तमितिमेम
तिः १ मेषस्नानंतुरेवायांगंगायांकर्कटेतथा स्थानान्येतानिशस्तानिप्रातस्नानेषुनारद २ नद्यःसमुद्रगाःसर्वास्तासुस्नानंप्रशस्यते त्रिरात्रफ
लदानद्योयाःकाश्चिदसमुद्रगाः ३ यच्छंतिपक्षस्नानफलंसागरगाःपृथक् सागरोमासस्नानफलदःसरितांपतिः ४ गोदावरीमास
स्नानफलदाचसरस्वती वसंतयागफलदाकालिंदीगोसवप्रदा ५ जान्हवीवत्सरस्यस्ययज्ञस्यफलदामता पद्माकरंरथक्रांतस
वनस्यफलप्रदं ६ तथासंक्रांतिफलदंदेवखातंमुनीश्वर सौत्रामणीष्टिफलदंनराकंपल्वलंतथा ७ वह्निर्वापीप्यवभृथफलदाः
परिकीर्तिताः ततःस्थानफलंयत्तुमाघेकोटिगुणंभवेत् ८ माघेसप्तनदीसंगेस्नानंयःकुरुतेनरः राजसूयाश्वमेधानांफलंप्राप्नोत्यसं
शयः ९ यःकुर्यात्सप्तगंगासुयथासप्तसुमानवः माघस्नानंमुनिश्रेष्ठतेषांपुण्यमनंतकं १० जान्हवीवृद्धगंगाचकालिंदीचसरस्वती॥
कावेरीनर्मदावेणीसप्तगंगाःप्रकीर्तिताः ११ माघेमासिसकृत्स्नात्वागोमत्यांकृष्णसंनिधौ सायुज्यपदवींयातिदुरात्मापिकृतात्मवान्
१२ योमाघेप्रातरुत्थायगोमतींसंस्मरेद्यदि सगोमतीस्नानफलंप्राप्नोतिकिमुसेवया १३ क्षणमात्रंवसेद्यस्तुगोमत्यांकृष्णसंनिधौ माघे
मासिमुनिश्रेष्ठसयोगीभवतिध्रुवं १४ कावेर्यांमाघमासेतुमकरस्थेदिवाकरे त्रिरात्रस्नानमात्रेणमुच्यतेनात्रसंशयः १५ माघेपुष्करमा
साद्ययःस्नानंकर्तुमिच्छति तावतामुच्यतेपापैःकिंस्नानेनमुनीश्वर १६ प्रभातेस्नानमात्रेणमाघेमकरगेरवौ सर्वविश्वजिद्यज्ञफलंदिनमा
त्रेणायच्छति १७ माघेत्विंदुक्षयेयस्तुप्रगोकर्णेसागरेतुयः स्नानंकुरुतुशतफलंसर्वकर्मविमोचनं १८ कुरुक्षेत्रेतुयःकुर्यात्सप्तम्यांभानुवासरे
संपूज्यमाधवंदेवंकुष्टरोगाद्विमुच्यते १९ योभानुरथसप्तम्यांपुष्करेमकरेरवौ स्नात्वासंतर्प्यचपितॄन्मुच्यतेपैतृकादृणात् २० स्नात्वागार

चतुर्दश्यांमाघेमासिसरोवरे शालग्रामशिलांदत्वामुच्यतेचक्रराणत्रयात् २१ माघेमाधवमभ्यर्च्यस्नात्वामाघेसरोवरे सवत्सांगांतथादत्वा
गोसहस्रफलंलभेत् २२ चिदभ्रसरसिस्नात्वामाघेभौमाष्टमीदिने नभूयोजायतेक्वापिचिदभ्रस्यप्रसादतः २३ माघेशुक्लचतुर्दश्यांपर्वते
श्वेतनामके स्नात्वाचश्वेतसरसिश्वेतद्वीपेवसत्यसौ २४ माघेहस्तिगिरौयस्तुस्नात्वानंतसरोवरे दत्वाचशेषप्रतिमांश्वित्ररोगात्प्रमुच्यते
२५ मूकांबिकोगिरौयत्रस्नात्वाकामसरोवरे विलदुर्गेनथापूज्यतेनसायुज्यमाप्नुयात् २६ माघेपैठिनसिक्षेत्रेगोदायांस्नानकृन्नरः पिंपा
लेशप्रसादेनसुज्ञानीजायतेभुवि २७ ब्रह्मेश्वरेतथारौद्रेक्षेत्रेगोदावरीतटे स्नात्वाब्रह्मेश्वरलिंगंदृष्ट्वामोक्षमवाप्नुयात् २८ स्नानाशक्तोमा
घमासिपरिधायचवाससि प्रयागस्मरणंकृत्वामाघस्नानफलंभवेत् २९ प्रयागदर्शनान्मुक्तिर्नेजानेस्नानजंफलं तत्रापिमाघमासस्यको
वावर्णयितुंक्षमः ३० प्रयागेमाधवंदृष्ट्वामाघेस्नात्वापितॄनथ उद्दिश्यकृत्वाश्राद्धंचकृतकृत्योभवेन्नरः ३१ व्यतीपातेरवौमाघेब्राह्म
णान्भोजयेत्सुधीः पायसेनघृताक्तेनवंध्यापुत्रमवाप्नुयात् ३२ माघमासेभानुवारेरविग्रहशनाधिके माघेमकरगेभानौभानुवारोविशि
ष्यते ३३ तत्रसूर्यगतंविष्णुंपूज्यकामानवाप्नुयात् रविवारेकृतंस्नानंरात्रौभोजनवर्जितं ३४ पायसंभोजनंदत्वाब्रह्महत्यांव्यपोहति यः
शुक्रवारेचाष्टम्यांकृत्वामाधवपूजनं ३५ मल्लिकाकुसुमैःकृत्वालक्ष्मीस्थैर्यमवाप्नुयात् योमाघेकुजपंचम्यांमाधवंमालतीस्रजैः ३६
संपूज्याद्रकदानानिकृत्वासंभुंजयेन्नरः अत्रैवोदाहरंतीममितिहासंपुरातनं ३७ कालमृत्युहरंसौम्यमहापातकनाशनं पुरासौवीरदेशे
सौनाम्नावसुपतिर्वली ३८ तस्यासीत्तनयोनाम्नाविचित्ररथइत्यथ शस्त्रविद्यासुनिष्णातोवृद्धसेवीबलान्वितः ३९ बालामृगणसमप्र
ख्यातिद्वितीयइवभास्करः तस्मिनातुदिशोजित्वाकृत्वाविश्वजितंमखं ४० सर्वस्वंदक्षिणांदत्वासोभूत्पूर्णमनोरथः एतस्मिन्नेवकालेतुमुनि

चक्रतुः स्नानं सिद्धिमापुश्च पंचते ८६ अतः सर्वान्परित्यज्य श्रुता विष्णुकथा शुभा ददाति सर्वानर्थांश्च नात्र कार्या विचारणा ८७
कृतान्यपि च कर्माणि विना विष्णुकथां शुभां अजागलस्तनमिव वृथा नानि विदो विदुः ८८ इति श्रीवायुपुराणे माघमाहात्म्ये
विंशोऽध्यायः २० शांडिल्य उवाच योगाद्धि श्रमकाले तु मनसा चिंतयेच्छुभान् नाशुभांश्चिंतयेत्क्वापि तेन दुःखं न विंदति १ म
न एव मनुष्याणां कारणं बंधमोक्षयोः तस्मान्मनो जयेन्नित्यं यत्नं कुर्याद्धि चक्षणः २ जिते मनसि यत्नेन सर्वान्कामानवाप्नुयात्
तस्मिन्नेवाजिते कामान्नैव सर्वानवाप्नुयात् ३ अत्रैवोदाहरंतीममितिहासं पुरातनं सुशीलदृढजयोर्वृत्तं श्रवणाद्धि महर्षयः ४ सु
कर्मतनयः पुण्यः सुशीलो नाम वै द्विजः यात्रादिने महापुण्ये ग्रामे नंदिवरे शुभे ५ सुदृढो दृढजन्नामा नो तस्य पुत्रोऽवयोगतो याजकौ
गुणसंपन्नौ नानाविद्याविशारदौ ६ कदाचिद्गच्छमानौ तु प्रयागं यतुमुनी कृष्णाष्टम्युत्सवश्चासीत्तस्यां रात्रौ गुणोत्तमः ७ देवाल
यं महापुण्यं माधवस्य महात्मनः तौ गतौ चोत्सवं द्रष्टुं प्रतातस्त्वा पुरुषश्च तौ ८ महावृष्टिस्तथा चासीत्तथा भ्रष्टौ यथा तु भौ वेश्यागा
रमगादेको एको देवालयं गतः ९ दृढो देवालयं गत्वा चिंतयामास दुष्टधीः सुदृढो ह्यगमद्वेश्यागारं क्रीडापदं शुभं १० कोमलां
ग्या तया सार्द्धमुपविष्टः सहासिनं यथासुखं च सरसं महालापविनिश्चयं ११ तांबूलचर्वणात्कालस्तया साकं गमिष्यति निर्भरं परि
रंभं च करिष्यति न संशयः १२ स शेते च तया साकं पर्यंके च मनोरमे इत्यादि चिंतयानो तो रात्रिशेषो दुरात्मना १३ पश्यन्नपि महावि
ष्णुं स्वर्च्चितं न च पश्यति शृण्वन्कथां महादिव्यां न शृणोति हि चिंतया १४ नमस्करोति कायेन न करोति नमस्क्रियां वाचा स्तोत्रं व
दन्नापि न वदत्येव चंचलः १५ रात्रौ भक्तैश्च नृत्यद्भिर्नृत्यन्नापि न नृत्यति आलपद्बहुधा वार्तां नालपन्निव तिष्ठति १६ गते मनसि

चान्यत्रचित्रार्पितइवस्थितः वेश्यागारस्थितोप्येवंचिंतयामासतन्मनाः १७ किंतेनसुकृतंपूर्वंकृतंजन्मसहस्रकैः तदद्य
फलितंतस्यप्रायोद्रक्ष्यतिमाधवं १८ कृष्णायार्घ्यंददात्यद्यविद्वद्भिरनुमोदितः नेत्राभ्यांमाधवस्यास्यपूजांपश्यतिनिश्चलः १९
विष्णोरारात्रिकंपुण्यंदिव्यंचंद्रसमाननः पश्यत्यत्रफलंसम्यगाप्तंतेनमहात्मना २० पुष्पांजलिंमहाविष्णोर्यामेयामेकरिष्यति
नमस्करोतिमूर्धायंवाचास्तौतिनिरंतरं २१ कथाश्रोष्यतिवैकुंठपतेर्नारायणस्यच श्रोत्राणामामहापुण्यासद्भक्तमुखनिःसृता २२
नृत्यद्भिस्तस्यवैभक्तैःसहानृत्यतिनिश्चितं धूपकालेहरेर्मूर्तिंधूपदीपंचपश्यति २३ नानेनसदृशोलोकेकृतकृत्योभविष्यति क्वेदं
पुनर्ममादृष्टंदिवसेकृष्णवल्लभे २४ वेश्यागारेभवद्वासःसर्वपापालयेशुभे मत्कालोद्यवृथायातोश्रोत्रंघ्राणमेवृथा २५ वह्नि
पितेमेनयनेमहोत्सवमपश्यतः भस्त्रायतेममोच्छ्वासस्तन्निर्माल्यमजिघ्रतः २६ दर्वीभूतौतुमेहस्तौवृथाजातोदुरात्मनः नांजलिः
शिरसाबद्धोविष्णवेपरमात्मने २७ त्राहित्राहीतिनाजानुप्रार्थितोहरिरीश्वरः प्रदक्षिणैर्नमस्कारैःस्तोत्रैर्नानाविधैरपि २८ यथान
संस्तुतोविष्णुःसंसारार्णवतारकः कथंपुंसोह्यभाग्यस्यभविष्यतिसमृद्धयः २९ कथंतेनसहायातःकथंभिन्नत्वमागतः विनास
मागमंसद्भिस्तुरिमेद्यपुनायते ३० कालोविषायतेमेद्यकंसशत्रुमपश्यतः कियतांजन्मनांपापंफलितंमेदुरात्मनः ३१ दूरदृष्ट
महावृष्टिस्वरूपेणाद्यचागतः अहोचातीवपापीयान्स्यागमुक्तिदःशुभे ३२ दुःसंगोनरकावाप्तिःकारणाकृतआगतः एकसेव
सुतावावांतथायैकत्रचागतौ ३३ ग्राममेकंगतौविप्रौस्थितौभिन्नावयोःकथं कृष्णजन्मदिनेपुण्येनचार्घ्यंविष्णवेर्पितं ३४ न
जागरःकृतोरात्रौप्रीतयेमधुवैरिणः मयाश्रुतानिशास्त्राणिवेदाश्चैवविचारिताः ३५ कथंनोन्मादयंत्येतेसुखदुःखसहिष्णुता

मनोदार्ढ्यविहीनानां मायां विष्णोर्दुरत्ययां ३६ पुष्टं च बहुशो पापैः कायमेतन्न निष्कृतिः अनेकदोषपुष्टोस्मि कथं लोभो मयार्जितः ३७ ते धन्याः मानिनो लोके सुखदुःखसहिष्णवः तेषां गतिर्महाविष्णुर्योगिध्येयांघ्रिपंकजः ३८ शरीरपोषणो सक्ता दुरात्मानश्च तादृशाः पुण्यान्देहान्विनश्यंतस्तान्विहाय पतत्यधः ३९ इति संचिंतयातस्य रात्रिशेषा गता वत पुनः प्रातर्मिलितयाभ्रात्रो दैवानुकूलतः ४० अभूदशनिपातश्च युगपन्मरणं तयोः आजग्मतुस्ततो नेतुं द्वौ विष्णोः किंकरौ प्रभो ४१ यमदूतास्त्रयश्चापि सह सालाकशिक्षकाः सुवृत्तं विष्णुदूतौ तु विमाने स्थाप्य निन्यतुः ४२ स्थितं देवालये वृत्तं बबंधुस्तु यमानुगाः दूतास्ते विष्णुयमयोश्च क्रुगमनमुद्यताः ४३ सुवृत्तो विस्मितो भूत्वा विष्णुदूतावथाब्रवीत् वैषम्यं क्रियते कस्मात्कर्मणाः पापपुण्ययोः ४४ नक्तं न न चदृष्टं च वैदिके लौकिकोपि च वृत्तेन पुण्यदिवसे जयंत्यां कृष्णवल्लभे ४५ प्रयागे चास्थितं तेन तत्र था माधवमंदिरे जागरस्तु कृतस्तेन कृष्णायार्घ्यं निवेदितं ४६ पुष्पांजलिः कृता तेन पीता विष्णुकथा शुभा तथैव महता संगो जातो दैवान्महात्मनः ४७ वेश्यागारे प्रयागे तु स्थितं दुष्टात्मना मया न कृतः पुण्यदिवसे जागरो विष्णुवल्लभे ४८ तथा कृष्णाय न त्यानो कृष्णायार्घ्यं निवेदितं सर्वपुण्याधिकः कालो वृथा नीतो मयात्र वै ४९ तत्पूर्वो समकर्माणौ सहाधीतौ सहश्रुतौ तथापि गतिवैषम्यमावयोः विष्णुकिंकरौ ५० तस्माज्ज्ञातं तु वदतं विलक्षणं मे महामती इति तद्वचनं श्रुत्वा सुवृत्तस्य महात्मनः ५१ प्रत्यूचतुर्विष्णुदूतौ सुवृत्तं विस्मयाकुलौ शृणु धर्मरहस्यं त्वं विचित्रं रोमहर्षणं ५२ कर्मणां कृतिमात्रं तु न ददाति फलं महत् सर्वेषामपि कर्मणां मनःशुद्धिर्हि कारणं ५३ मनसा चं चलेनेव कृतं कर्म च दुःखदं मनसा चिंतितो वापि धर्मः फलविवर्धनः ५४

मा॰वा॰ कृतंभूर्यसत्कृत्कर्मदृष्टेनेनाशुभविनया तस्मात्तुनरकंयान्तिघोरेणाचतथाह्यसौ ५५ त्वयातुगम्यतेलोकस्त्वत्प्राप्यश्चदुरात्मनां॥
४२ चिंतयाशुभयादातुर्विष्णोर्देवस्यचक्रिणः ५६ इत्युक्तेविष्णुदूताभ्यांसुवृत्तोवाक्यमब्रवीत् नेनेविहायगंतुंमेमनउत्सहते
प्रभू ५७ अथवायमपाशेभ्योमुक्तिःस्याद्दातुरस्यमे वदतंकरुणार्द्रेणचित्तेनस्मरतश्रमां ५८ आश्रुत्यैवंसुवृत्तोक्तमूचतुर्वि
ष्णुकिंकरौ दयास्तितेयदानस्मिन्माघस्नानफलंशुभं ५९ पूर्वजन्मकृतंतेनत्तिमनःपूर्वमनुष्ठितं देहितत्पुण्यमतुलंमुक्तिरस्यभ
विष्यति ६० विष्णुदूतवचःश्रुत्वासुवृत्तःसुमनाद्विजः ददौतेनोक्तमार्गेणपुण्यंतस्मैसमाहितः ६१ तेनपुण्यप्रभावेनमुक्तोभूद्य
मपाशतः ततोभ्रातासहाराध्यायविमानंपतगध्वजं ६२ विष्णुलोकंययौधीमान्विष्णुलोकप्रणोदितः तस्माद्दानंतपोहोमः
स्वाध्यायःपितृतर्पणं ६३ नित्यंनैमित्तिकंचापिचरेत्कुर्द्देनचेतसा नेनकामानवाप्नोतिभुक्तिमुक्तीनसंशयः ६४ अवशी
कृतचित्तस्यकुतोयोगसमाधयः मनोनिग्रहणेतस्माद्यत्नंकुर्याद्विचक्षणः ६५ यच्छास्त्रश्रवणेनैवमनसोनिग्रहोभवेत्
संप्रदायस्तुगुरुणासंशयच्छेदशक्तिना ६६ श्रोतव्यंसततंभक्त्यासत्कर्मश्रुतिपूर्वकं अंतःकरणकालुष्यंतेनयातिनसंशयः
६७ गुरुशुश्रूषयाभक्त्याश्रद्धयात्वदमेनच यमेननियमेनैवयोगीयोगित्वमाप्नुयात् ६८ इतिश्रीवायुपुराणेमाघमाहात्म्येए
कविंशोऽध्यायः २१ शांडिल्यउवाच चित्तस्वास्थ्यंयदानास्तितदाविष्णोर्महात्मनः स्थूलरूपंमनस्तत्रधियासंधारयेद्बु
धः १ विशेषस्तस्यदेहोयंमहानपिमहीयसां जितेंद्रियोजितश्वासोनिःसंगोनियतासनः २ भूतंभाविभवच्चापिदृश्यतेयत्र राम:
चाखिलं विराड्रूपेमनस्तस्मिन्धारयेदव्ययात्मनि ३ याधारणातस्यपुंसोदहत्याशुमनोमलं पातालंपादमूलेचोक्तनये ४२

स्वरसातलं ४ सुरेश पार्ष्णिप्रपदे गुल्फयोस्तु रसातलं तलातलं जंघयोश्च जान्वोश्च सुतलं तथा ५ वितलातलं तस्योर्वोर्ज-
घने च महीतलं नाभौ नभस्तलं विष्णोरुरो ज्योतिर्गणं विदुः ६ ग्रीवायां तु महर्लोको वदने तु जनस्तथा ललाटे तु तपोलोकः
सत्यं शीर्ष्णि महात्मनः ७ इंद्राद्या बाहवस्तस्य दिग्देवाः श्रोत्रयोर्विदुः आहुस्त्वगिंद्रिये शब्दं नासायामश्विनौ विदुः ८ प्राणेंद्रि-
येन तथा गंधं मुखं चाग्निसमुद्भवं तस्य द्यौरक्षिणी प्रोक्ते चक्षुः शशिदिवाकरौ ९ पक्ष्मणी च दिवानक्तं संध्ये चास्य च वाससी मूर्धजे-
ष्वंबुवाहाश्च हृदयं व्यक्तमेव च १० विकारकोशश्च द्रष्टा मनस्तस्य महात्मनः मनो विज्ञानशक्तिं च गीरित्रं चांतराशये ११ अश्वा-
श्वतर्युष्ट्रगजा नखेष्वस्य महात्मनः मनीषायां मनुं चाहुर्विश्वासे मनुजं विदुः १२ गंधर्वचारणाद्याश्च स्वरे विष्णोर्महात्मनः कुक्षौ
समुद्राः सर्वेऽपि नद्यो नाडीषु संस्थिताः १३ गिरयश्चास्थिसंघेषु नखश्च तनूरुहाः ब्राह्मणस्तु मुखं तस्य बाह्वोः क्षत्रं विदो विदुः १४
ऊर्वोर्वैश्यं पदे शूद्रं तं तन्नलेसं करादयः गुह्ये प्रजापतिं चाहुर्वृषणं मित्रमेव च १५ वीर्यं चान्नं स्मितं प्राहुः श्वसिते च सदागतिः गति-
र्वयश्च जंतूनां ब्रह्मायुर्भ्रूविजृंभणं १६ तालु मायारसो जिह्वा शिश्नं कंदोऽसि वेहरेः दंष्ट्रयोर्यममृत्यू च दंतानुडुगणान्विदुः १७
मनोन्मादकरी माया हासस्तस्य महात्मनः महती जगतः सृष्टिस्तस्यापांगविमोक्षणं १८ लज्जोर्ध्वोष्ठे महाविष्णोर्लोभस्तस्याध-
रोष्ठके धर्मोऽस्य स्तनयोराहुः पृष्ठं चाधर्मपद्धतिं १९ यदेतत्सकलं लोके विष्णोरंगेषु चिंतयेत् यत्किंचिदद्भुताधारमित्येवं तद्धि
चिंतयेत् २० मनसा चिंतितेनैवं मनःशुद्धिमवाप्नुयात् अत्राणस्तस्य च जनुः शृण्वन्विष्णोः कथाः शुभाः २१ तस्य जन्मानि कर्माणि
नामानि सुबहून्यपि गीतान्यपि मतदर्थानि विलज्जोऽप्यनिशं सदा २२ गायन्स्मरन्वदन्नित्यं यत्र कुत्रापि संचरेत् अलमेनावृताशुभः

पापनिर्हरणायच २३ गुणानांकर्मणांवापिकीर्त्तनेनगदाभृतः कलौकलुषचित्तानांनराणामल्पमेधसां २४ गुणसंकीर्तनं
विष्णोः सकलाध्यानसंस्थितिः विष्णोरेकैकनामापिसर्ववेदाधिकंमतं २५ नाम्निसंकीर्त्तितेनित्यंकिंतस्यसुकृतैःपरैः मृतभ
र्त्रीयथानार्यःसर्वलक्षणसंपदः २६ शरीरेणांगनानांनायथालंकरणक्रिया विद्यानपुरुषस्यैवसर्वेंद्रियपरिक्रिया २७ नपुंस
कस्यभार्यैवपुंसोवंध्यापरिग्रहः यथैवापयशःपुत्रोकुलस्येवदुरात्मवान् २८ विष्णुभक्तिविहीनस्यतथाजन्मनिरर्थकं शश
क्तिः पापनिर्हारेनाम्नोस्यमहतीविभोः २९ तावत्कर्तुंनशक्नोतिपातकंपातकीजनः परेणाच्चारितंवापिश्रुतंनामाघपावकं
३० नयस्यहृदिनसंदेहोनरकस्थानपिध्रुवं नजानंतिनराःकिंवानारदस्यमहात्मनः ३१ चरितंयमलोकेतुनारकाणांसमुद्धृतिः
अष्टाविंशतिपुरुषाऊचुः कदागाद्यमलोकंतुनारदोभगवान्मुनिः ३२ कथंवानारकाणांचउद्धारःपापकर्मणां एतद्ब्रह्मन्महा
श्चर्यंश्रोतुंकौतूहलंहिनः ३३ ऋषिरुवाच पुरातुनारदोगत्वामहात्माविष्णुमंदिरं स्तुत्वातुविविधैःस्तोत्रैर्नारायणमनामयं
३४ अनुज्ञातस्तथातेनदेवेंद्रसदनंययौ दृष्ट्वाचजिष्णुंतत्रस्थान्विशेषानप्यचिंतयत् ३५ इतःपरंतुगंतव्यंमयाकुत्रेतिना
रदः सर्वलोकामयादृष्टाविशेषाअपिनद्भुताः ३६ कदाप्यदृष्टलोकोयंयमस्यतुमहात्मनः सद्रष्टव्योमयेदानींनरकाअ
पिदारुणाः ३७ विचार्यैवंययौधीमान्यमलोकंदुरासदं तत्रापश्यन्मुनींद्रोसौपरीसंयमनींमहान् ३८ नरकान्दारुणांश्चैवभृ
शमाक्रंदितान्जनान् तप्तताम्रकटाहस्थान्पाचनश्चाननस्ततः ३९ तैलकुंभनिरुद्धांसेक्वाथ्यमानान्कचित्कचित् तैलयंत्रे
पीड्यमानानिक्षुयंत्रेतथापरान् ४० क्रकचैर्भिद्यमानांश्चछिन्नांगानसिपत्रकैः वज्रकल्पजलौकाभिर्गृध्रैःकंकैर्महोत्कटैः

४१ शिशुमारैस्तथा मत्स्यैः क्रिमिभिश्च सुदारुणैः वकैश्च पक्षिभिर्घोरैर्मांसादैर्जलवासिभिः ४२ विष्ठाकूपे महाघोरे छिन्नाङ्गा
गान्क्रमेणसंचितान् यमदूतैर्महाघोरैः पादग्राहिभिरंजसा ४३ शिलातलेपोथ्यमानांश्चूर्णितांगात्रनानपि पाचितांगान्तथा क्वा
थितप्रायः पिंडमश्नतः ४४ तप्तसीसरसप्रोतकर्णयुग्मान्क्वचित्क्वचित् सूचीपूरितजिह्वांश्च जिह्वोत्पाटनदुःखितान् ४५ वह्निवर्षैः
शिलावर्षैः शस्त्रवर्षैश्च पीडितान् क्षुधया चाश्नतो मांसान्स्वकायस्थाननल्पकान् ४६ व्याधिभिः पीड्यमानांश्च भक्ष्यमाणान्वृ
कादिभिः क्वचित्ताडनसंत्रस्तांस्तर्जनैर्भर्जनैरपि ४७ वद्धपादभुजादंडान्स्पृष्टजानुहतानुजनान् शस्त्रच्छिन्नांगसंलिप्तक्षारद्रव्या
ण्यनेकशः ४८ अंगारराशिमध्ये तु पातितानश्वधातुकान् भूतरक्षःपिशाचाद्यैर्गृध्रैः सिंहैःश्वभिस्तथा ४९ भक्ष्यमाणान्वि
शीर्णांगान्गिरिपातविचूर्णितान् क्वचिद्विषमगर्तेषु च नप्तपंके च दारुणे ५० आकंठमग्नान्दुःखार्तान्दृष्ट्वा रोदनाकुलान्
शोचतस्तानि कर्माणि स्मृत्वा स्मृत्वा पुनःपुनः ५१ तान्दृष्ट्वा कृपयाविष्टो भगवान्नारदो मुनिः अतिविस्मयमापन्नो वाक्यमेतदुवाच
ह ५२ नारायणेति मन्त्रोऽस्ति वागस्ति वशवर्तिनी तथापि नरके घोरे पतंतीत्यद्भुतं महत् ५३ पापानां कर्मही नानामलसानां
दुरात्मनां जीवनं हरिनामैव गतिर्नान्येह विद्यते ५४ विचार्येवं सुदुःखेन कृपयाकुलचेतनः शिलामारुह्य महतीं वीणामा
दाय सुस्वरां ५५ संजगौ हरिनामानि भृशमुच्चैर्मुदान्वितः गोविंद नारायण वासुदेव मुकुंद कृष्णाच्युत माधवेति ५६ नृसिंह दे
वेश हरे मुरारे रमेश लोकेश जगन्निवास अनंत वैकुंठ दुरंतशक्ते समस्तलोकस्य निदानमूर्ते ५७ निरंजनानंतगुणाकरेशविद्रू
प निर्दोष जगद्विहार निरूप नित्याव्यय निर्विकार निराश्रयानंत विचित्रकर्मन् ५८ दाशार्ह कृष्ण खगवाहन वारिजाक्ष नारायणा

खिलगुरोर्जगतामधीश विभ्वोदयस्थितिलयोर्धगतिप्रदेति यावन्मुमोदमुदमापिनवाङ्गनानां ५९ तच्छ्रुत्वानरकस्थास्तेहेसै
मामृतंशुभं उत्तस्थुर्यातनास्थानान्मुक्तपाशाश्चसर्वशः ६० तत्क्षणात्पुष्पकारूढादिव्यरूपामनोरमाः दिवंजग्मुः प्रांजलयः
स्तुवंतोनारदंमुनिं ६१ तदायमपुरीशून्याजनार्तस्वरवर्जिता अभवत्तत्क्षणादेवयमदूताः सुविस्मिताः ६२ तूष्णींभूताकृत्यहीना
यमायैतन्न्यवेदयत् धर्मराडपितच्छ्रुत्वानारदस्यविचेष्टितं ६३ आगत्यनारदाभ्याशंजगादातीवविह्वलः नमस्तेनारदमुनेलोका
नुग्रहकारण ६४ स्वस्तितेस्तुपुरीपालिहलभेवानः परंमुने लोकनाथाज्ञयाविप्रपालितेषापुरीमया ६५ शून्याजातात्वयाचैषाशून्य
ग्रामेनुकिंफलं आगताः संपदोलोकेनाशंयांतिबलीयसा ६६ अथवातेनभुंजेतेतस्मात्वंशाधिमेपुरीं इतिकीनाशवचनंश्रुत्वासौ
नारदोब्रवीत् ६७ मावादीर्धर्मराजेत्थंमयाकिमपिनोकृतं कस्माज्जातापुरीशून्यानजानेहंसुराजम ६८ स्वर्लोकंद्रष्टुकामोहंदै
वादिहसमागतः आर्त्तानांदर्शनेलोकेकृपासंजायतेध्रुवं ६९ ममापिकरुणाजाताभृशार्त्तानांचदर्शने कृपयातिखिन्नमना
अवोचंवैस्वभावतः ७० महिम्नातस्यनिरयान्निर्यातायातनास्थिताः ययुःस्वर्गंदिव्यरूपाः किंयमाद्यकृतंनव ७१ दुःखंकस्माद्
वेदयमेतथामांवक्तुमर्हसि त्वत्पुरंनागमिष्यामिकदाचिद्प्रभृतीतिसः ७२ आश्वस्तापियमस्तस्मैददौशापंसुदुःखितः एतद्दिवस
पर्यंतसुखदोसितनूभृतां ७३ अद्यप्रभृतित्वंविप्रभवाशुकलहप्रियः ययौमुनिस्तुकैलासंधर्मराट्स्वपुरींययौ ७४ तस्मान्नामा
मृतंनित्यंसेवन्निर्वृतिमाप्नुयात् नानेनसदृशोमंत्रोलोकेनास्तिपतामहात् ७५ स्मरतःस्मारयतश्चविष्णोर्नामापिनित्यशः येस्म
रंतिदिवारात्रंतेगच्छंतिहरेःपदं ७६ शौचाचारविहीनाश्चब्रह्मचर्यविवर्जिताः तपोहीनाज्ञानहीनानाममात्रैकजल्पकाः ७७

भक्त्यांगतिमाप्तास्तेनतां सर्वेपिधार्मिकाः जिह्वाग्रेवर्ततेयस्यविष्णोर्नामामृतंशुभं ७८ श्वपचोपिगरीयान्स्यान्नात्रकार्याविचा
रणा ७९ इतिश्रीवायुपुराणेमाघमाहात्म्येद्वाविंशोध्यायः २२ दिव्यपुरुषाऊचुः अतिभूरीणिकर्माणिकृतान्यस्माभिरंजसा
अनायासकृतेनास्यसुयज्ञस्यैवकर्मणा १ कथंनष्टानिब्रह्मर्षेएतद्विस्तरतोवद शांडिल्यउवाच. अनायासमहायासौनफ
लेतुप्रयोजकौ २ जंतुकर्मस्वरूपंहिकारणंतद्विदोविदुः गुरुत्वंचलघुत्वंचनफलेतुप्रयोजकौ ३ अपिचातिप्रयासेनगोदुग्धसा
ध्यामिथ्यना नहितेनावतालोकेसर्वदुःखनिवारणं ४ तृणपमपिशार्दूलदुग्धंलोकेनशस्यते लघुदीपोगृहेतिष्ठन्तमोनाशयति
ध्रुवं ५ अतिघोतकांस्यपात्रस्थूलमणवपिनोत्तमः माघमासिजलस्पर्शः स्वल्पोप्यघविदारणः ६ प्रभातेमकरेभानौविचित्राकर्म
णांगतिः पूर्वोक्तवर्त्मनायस्तुमाघस्नानंसमाचरेत् ७ तेनसर्वाणिकर्माणिकृतान्येवनसंशयः अनुतापविहीनस्यसकलानिष्फ
लाःक्रियाः ८ जलसेकविहीनस्यदलेतत्क्षितिक्रियायथा अपिगोष्पदनीरेपियःस्नानंकर्तुमिच्छति ९ प्रातःस्नात्वानथाभ्यर्च्यमा
धवंपुरुषोत्तमं दिनमेकंनयत्येवंकोटियज्ञफलंभवेत् १० भुक्त्वानुसकलान्कामान्विष्णुलोकेमहीयते सुवर्णतुलसीपत्रैर्माध
वंयस्तुपूजयेत् ११ पंत्रेणैकेनकोप्यद्यपूजितस्तेनकेशवः माधवप्रतिमांकृत्वामाघेमासिददातियः १२ सर्वपापविनिर्मुक्तःस
यातिपरमंपदं योमाघस्नानधर्माणांसाहाय्यंकुरुतेनरः १३ सोपितत्फलमासाद्यमहत्फलमवाप्नुयात् अत्रैवोदाहरंतीममि
तिहासंपुरातनं १४ लक्षणायाश्चसंवादंयाजकस्यमहात्मनः आर्यावर्तेपुराकाचिद्वैश्याभूल्लक्षणाह्वया १५ तस्याभुजंगःशू
द्रोभूद्वंशोनामायुवावली सालक्षणाऋजुस्नानार्थिनागोदावरीतटे १६ बालवैधव्यदुःखेनरुदंतीचकुमारिका मृतेपतिपुरः

जडानाम

स्थाप्य बंधुभिः परिवारिता १७ आक्रंदंतीततोवीक्ष्य यशोनेतां प्रत्यपद्यत लुंठंती भुवितापेन मुहुर्भ्रमंती मुरोवहु १८ जडानाम

पिकारूत्संजायंते नानुपश्यतां तदाचलक्षणावेश्यास्तभुजंगमुवाचह १९ कुलजानां च नारीणां दशैपंचसुदारुणा अवस्था

त्रयमेवासीत्तत्रेयं तु सुदारुणा २० कन्यात्वंजीवत्पतित्वं विधवात्वमितित्रिधा पारवश्यं च नारीणां दुःखमामरणांतिकं २१ मृ

नापत्यं च वैधव्यं तथैवापुत्रतास्त्रियां असह्यमेतत्त्रितयं वैधव्यं तत्र चोत्तरं वालेपंशोचंतेतीव कस्येदं कर्मणः फलं निवर्ततेवा

केनापिकोवावेत्तीतितामथ २३ उवाच सयशोनामा भुजंगः सूनृतंवचः शृणु भद्रे प्रवक्ष्यामि सृष्टास्तष्टाः पुराद्विजाः २४ देवानां

चैवलोकानां हितार्थं मंत्रकोविदाः शास्त्रज्ञानप्रभावाच्चजीवानां च पुराकृतं २५ जानंति कर्म च फलं ते प्रष्टव्यादृतव्रताः भुजंग

वचनं श्रुत्वा तथैवामितिसापुनः २६ तत्रागमज्ज्ञानवृद्ध्या याजकं नाम वैद्विजं पप्रच्छतं तदादीनाप्रश्नकातरमानसा २७ लक्षणे

वाच मुनेअहं दुराचाराकुलयालक्ष्मणाहृया तथापितेदयापात्रं पृच्छतीमानिवोधय २८ साधूनां समचित्तानां समाः सर्वेजना

भुवि दुर्गंधोवासुगंधोवायथावायोः समोभवेत् २९ मुनेदशयनारीणां तृतीयातीवदुःसहा कर्मणाजायतेकेनकेनवास्यनिवार

णं ३० एतद्विलार्यमेव्रह्मन्कृपयावदसुव्रत इतितस्याः वचः श्रुत्वा याजकोवाक्यमब्रवीत् ३१ दैवेकर्माणि पित्र्ये च नार्यः पाकेषु

संस्थिताः अकस्माद्रजसादुष्टास्पृष्टभांडाद्युपस्कराः ३२ अज्ञानाद्वाभयाद्वापि कामाद्वा लोभात्क्वचित्स्त्रियः अवेदयित्वागच्छंति

तेनदुष्यंतिसत्क्रियाः ३३ क्रियालोपकराह्येताः पापादस्माद्दुरत्ययात् दशामिमां प्राप्नुवंति सर्वा अपि न संशयः ३४ वाल्येपियो

वनेवापि वार्द्धकेवा कदाचन तत्रयानुदुराचारापरानेवाभिकांक्षति ३५ श्वश्रूश्वशुरपतिवधूनां नित्यंवाचासुदुःखदा एतत्सहायतो

नारीयादूषयतिसत्क्रियाः ३६ वाल्येवैधव्यमाप्नोतिसानारीनात्रसंशयः ऋतुस्नानातुयानारीवालकानवलोकयेत् ३७
लव्ध्वाततोहिगर्भंतुवालानामुपघातिनी एतत्कर्मसहायेनरजसादूषितातुया ३८ मृतापत्यातथाभूत्वावैधव्यंयौवनेव्रजेत्
यानारीरजसादुष्टासर्वभांडानिसंस्पृशेत् ३९ सासमाप्नोतिवैधव्यंवार्धकेसमुपागते याचानुकूलसहितापतिधर्मेषुसर्वदा
४० बाल्येवैधव्यमापन्नापतिहीनाभवत्यलं सर्वासामपिवैधव्येनिदानंपुष्पसंभवः ४१ शांतिंतस्यप्रवक्ष्यामिकर्मणोस्यापिल
क्षणे कृतेनुऋषिपंचम्याव्रतेशास्त्रावशेषितं ४२ पापंगच्छतिनारीणामितिवेदविदोविदुः शूर्पेसवायनेदत्तेकृतेलक्ष्मीव्रता
दिके ४३ मूलावशेषंव्रजतिरजोदोषानसंशयः निर्मूलंतुव्रजत्याशुलक्षवर्तिव्रतेकृते ४४ रजसोत्थमहत्पापंनारीणांचन
संशयः इतितद्वचनंश्रुत्वापुनःपप्रच्छलक्ष्मणा ४५ मनसाशंकिताभूत्वासादरंमुनिपुंगवं साधुसाधुमहाभागचित्तेमेभयविह्व
लं ४६ लक्षवर्तिव्रतंचास्यविधानंकीदृशंवद कस्मिन्मासेप्रकर्तव्यंकदातस्यसमर्पणं ४७ उद्यापनंकथंकार्यंकिंफलंतस्यवा
मुने त्वयापृष्टोयाजकोपिलोकानांहितकाम्यया ४८ फलंविधानंयत्सर्वंतद्वोचन्महामुनिः कालोहिकार्तिकोमासोवैशा
खोमाघएववा ४९ सहस्रगुणितंदत्तंव्रतमेतद्धिकार्तिके तस्मात्कोटिगुणंदत्तेमाघमासिव्रतोत्तमं ५० तस्मादनंतगुणितंफ
लंवैशाखमासिवै एतस्मिन्मासत्रितयेयस्मिन्मासिसमाप्यते ५१ तस्मान्मासत्रयात्पूर्वंप्रारब्धमिदंव्रतं अंतिमेमासिकुर्वीतस
माप्तिंतुविचक्षणः ५२ सहस्रवर्तिभिःकुर्यादारार्तिंविष्णवेन्वहं घृतेनाप्यथवातैलेनसम्यग्युक्तेमनोरमेः ५३ यस्मिन्मासिसमाप्तिः
स्यात्पूर्णायांनत्रकारयेत् पुण्याहवाचनंकुर्याद्वरेदाचार्यमुत्तमं ५४ ब्राह्मणऋत्विजश्चैवकुर्याज्जपरायणंजसा सतिलैश्चयवैः

कुर्यादनेनयऋचाद्विजैः ५५ वर्त्तीदशांशतः कुर्यात्तर्पणंतुविचक्षणः तर्पणस्यदशांशेनहोमंकुर्याद्विचक्षणः ५६ तर्पणोक्ते
नमंत्रेणपायसंचघृतान्वितं पलाशसमिधश्चैवमंत्रैरेभिश्चवैष्णवैः ५७ घृतंचविष्णुगायत्र्याहोमस्यायंविधिर्मतः कलशंस्तुतथा
स्थाप्यसविधानःसवस्त्रकः ५८ तन्मध्येसाधिदेवानांप्रतिमाःस्थापयेत्ततः कालोविष्णुस्तथावन्हीरविर्ब्रह्मानिशाकरः ५९
रुद्रःशेषोजगद्व्यापीतेजोरूपीमहेश्वरः निरंजनःकलाध्यक्षोविश्वरूपीजगत्प्रभुः ६० स्वप्रकाशःस्वयंज्योतिश्चतुर्व्यूहोजनाश्रयः
परंब्रह्मेतिविंशद्भिर्नामभिःपूजयेद्धरिं ६१ शिरोललाटंनेत्रेचकर्णौनासामुखंभवेत् स्कंधौकंठंततोबाहूस्तनौवक्षस्तथोदरं ६२ ना
भिःकटीचजघनेऊरूजानूचगुल्फके पादस्तदग्रंक्रमतोह्यंगान्येतैश्चपूजयेत् ६३ धूपदीपौततोदत्वानैवेद्यंतुनिवेदयेत् आचार्य
मर्चयेत्पश्चाद्वस्त्रऋत्विक्प्रपूजनं ६४ गौर्देयास्यासवत्साचसालंकारगुणान्विता त्रिंशत्पलंकांस्यपात्रंघृतेनपरिपूरितं ६५ सुवर्णव
र्त्तिसंयुक्तंआचार्यायनिवेदयेत् अष्टादशपलंकांस्यंतथाघृतसमन्वितं ६६ सुवर्णवर्तिसंयुक्तंआचार्यायनिवेदयेत् अथवातुय
थाशक्तिदद्यादावश्यकंत्विति ६७ व्रताभावेतुयादद्यात्कांस्यंतुघृतपूरितं यावज्जीवंजीवभर्त्तामवत्येवनसंशयः ६८ रजोदोषविमु
क्तास्यात्पूर्णमासांददातिच ब्राह्मणान्भोजयेत्पश्चाद्विजशाठ्यंनकारयेत् ६९ याचैवंकुरुतेनारीतस्याःपुण्यफलंश्रृणु अवाच्या
न्यपिपापानिरहस्येवंकृतानिच ७० नश्यंतितानिसर्वाणिव्रतस्यास्यप्रभावतः चांडालगामिनीवापितथाशूद्राभिमर्शिनी ७१ का
रूकरजकादीनांसंगमाद्बहुदूषिता ब्रह्मक्षत्रियवैश्येषुप्रातिलोम्येनगामिनी ७२ मातुलेयपितृव्यादिभ्रातृपुत्राभिगामिनी बालघ्नी
वापितृघ्नीवामातापित्रोर्वधेरता ७३ गोघ्नीवातस्कराचापिरजःसंकरकारिणी वन्हिदागरदाचैवनित्यंचाप्रियवादिनी ७४ पत्योजीव

त्तियानारीमृतेवाव्यभिचारिणी एवमादिमहापापैराष्टतानाचकुलांगना ७५ कृत्वाचैतद्व्रतंपुण्यंमुच्यतेनात्रसंशयः व्रतानामुत्तमंचैतत्स्त्री
णामावश्यकंत्त्विदं ७६ एकार्त्तिकाप्रदानेपिविष्णोरमिततेजसः कोट्योब्रह्महत्यानांअगम्यागमकोटयः ७७ तथैवान्युग्रपापानांकोट
योथसहस्रशः नश्यंतिनात्रसंदेहोनार्यावापुरुषस्यच ७८ किंलक्षवर्तिभिर्विष्णोःकृतेचारार्तिकार्पणं किमत्रबहुनोक्तेननानेनसदृशं
व्रतं ७९ पुरुषोपिव्रतंकृत्वापूर्वोक्तैःपापसंचयैः मुच्यतेनात्रसंदेहोमधुशासनशासनात् ८० एतत्सर्वंमयाख्यातंपृच्छंत्यास्तवमानदेव्रतंकु
रुसुखंनिष्ठपश्चात्तेरोचतेमनः ८१ इतितद्वचनंश्रुत्वापुनःपप्रच्छलक्षणा अज्ञानाद्दुष्टभावाच्चनविश्वासोममेहच ८२ प्रत्ययार्थंततोब्रह्म
न्नत्वंसंकुरुमेधुना इतितद्वचनंश्रुत्वाराजकोवाक्यमब्रवीत् ८३ कथंतेप्रत्ययोभूयादितितांकरुणानिधिः साचोवाचपुनर्विप्रंविस्मयो
त्फुल्ललोचना ८४ नचवैधव्यमापन्नारोदितिसैषाकुमारिका तस्याःपतिःकथंजीवेद्वैधव्यंचैवगच्छति ८५ तथाकुरुमुनिश्रेष्ठदयाशाम
वतांधनं इतितद्वचनंश्रुत्वाराजकोवाक्यमब्रवीत् ८६ अद्यवैमकरंप्राप्तोभास्करोलोकभास्करः माघोयंचतथामासःसर्वक्रतुफलाधिकः
८७ तत्राद्यत्वंक्रतुस्नानालब्धंतेनातुलंफलं स्नानंकृत्वार्पणंकृत्वादेहिचास्मैमृतायच ८८ तेनजीवेदयंनूनंब्रह्मघ्नोयंपुराणिचतस्मा
दयंराजयक्ष्मरोगेणचमृतिंगतः ८९ तथापिमाघमासस्यपुण्याद्दुज्जीविताध्रुवं दापयित्वाहरेरार्तिकांस्यपात्रंतथैवच ९० जीवपत्नी
भवेदाशुयावदामरणांतिकं लक्षणावचनंश्रुत्वाजलंस्पृष्ट्वाचवाग्यतः ९१ स्नानंविष्णवर्पणंकृत्वाददौतस्मैफलंमुदा तस्यपुण्यप्रभावे
नतत्क्षणादेवचोत्थितः ९२ भुजंगस्तंप्रेषयित्वानीत्वापात्रंचकांस्यकं कुमार्यादापयामासवैधव्यस्यापनुत्तये ९३ एतत्पुण्यप्रभावेनकुमा
रीसापिशोभना यावज्जीवंजीवपत्नीवभूवबहुपुत्रका ९४ कुमारीशोभनानामतत्पतिःकणभोजनः तद्दृष्ट्वावास्तयासर्वेतुष्टुवुश्चैवलक्षणांरेष्

याजकं चैव संप्रीता जग्मुस्ते स्वनिकेतनं लक्षणा सापि दासेन भुजंगेन च संयुता ९६ माघस्नानं तथा कृत्वा व्रतमेतच्चकार सा ततस्तु म
रणं प्राप्ता दासस्तस्याः सहायकृत् ९७ गयो नाम महाराजश्चक्रवर्ती बभूव सः सा लक्षणा च तत्पत्नी सर्वलक्षणसंयुता ९८ बभूव लो
कविख्याता जीवपत्नी सुपुत्रका तस्माद्यो माघजं पुण्यं सहायार्थं करिष्यति ९९ तद्धर्मस्य फलं प्राप्य मुच्यते नात्र संशयः नित्यस्नाने त्व
शक्तश्चेत्तत्कुर्यात्त्रिदिनत्रये १०० द्वादश्यां रथसप्तम्यां पूर्णमास्यां तथैव च सोपि पूर्णफलं प्राप्य विष्णुलोके महीयते १०१ अथवा पौर्ण
मास्यां वा माघस्नानं चरेद्बुधः तावन्मात्रेण मुक्तः स्यान्नात्र कार्या विचारणा १०२ संध्यावन्नित्यकर्मेदं महापातकनाशनं यो न स्नाति
हृद्धो भूत्वा मकरस्थे दिवाकरे ३ ब्रह्महा स तु विज्ञेयः सर्वकर्मसु गर्हितः नारी वापि नरो वापि न स्नात्यत्रारुणोदये ४ रौरवं नरकं प्राप्य तिष्ठ
त्याभूतसंप्लवं रोगाद्युपहतो यस्तु पादौ प्रक्षाल्य वाग्यतः ५ धौतवस्त्रपरीधायस्त्रिराचम्य च वारिणा गायत्र्याभिमंत्रितं चांभः प्रोक्षयेन्मूर्ध्नि वै
द्विजः ६ सोपि स्नानफलं प्राप्य मोदते विष्णुमंदिरे इति श्रीवायुपुराणे माघमाहात्म्ये त्रयोविंशोध्यायः २३ शांडिल्य उवाच माघमासे
तु संप्राप्ते मकरस्थे दिवाकरे पूर्वोक्तविधिना स्नात्वा कोमलैस्तुलसीदलैः १ माधवं तु समभ्यर्च्य स्तुत्वा संस्तवराजतः माधवप्रतिमां
दत्वा भोजयित्वा द्विजोत्तमं २ एवं कृत्वा मासमेकं व्रतमेतत्समापयेत् कोटिजन्मार्जितं पापं निर्धूयाखिलसंपदः ३ भुक्त्वेह काम्या
न्भोगांश्च पुत्रपौत्रादिभिर्वृतः स कोटिकुलमुद्धृत्य विष्णुसायुज्यमाप्नुयात् ४ कलौ कलुषचित्तानां नराणां पापकर्मणां माघस्नानं
नित्यं तेषां सर्वाघौघविनाशनं ५ सर्वदुःखोपशमनं निदानं सर्वसंपदां प्रातर्माघे तु यः स्नात्वा सकृन्माधवमर्चयेत् ६ तावतैव विशुद्धात्मा
याति ब्रह्म सनातनं शीतार्तानां च साधूनां स्नातानामरुणोदये ७ यो ददाति धनैर्वह्निं वह्निलोकं स गच्छति माघे मकरगे भानौ प्रातःस्ना

नपरोनरः ८ तैलाभ्यंगपरित्यागीतथावैपत्रभोजनः कांस्यपात्रपरित्यागीविष्णोर्लोकेमहीयते ९ योर्थयेन्माघमासेतुविष्णवेपरमा
त्मने सगुडंतिलपिष्टंचसोपमृत्योर्विमुच्यते १० माघेमाधवरूपंतुसौवर्णंतुददातिच सतुमोक्षमवाप्नोतिकुलमुद्धृत्यतेशतं ११ यो
माघेशिशुमारस्यप्रतिमांतुद्विजातये मृतापत्याख्यदोषेणमुच्यतेनात्रसंशयः १२ सुवर्णकोटिभारंतुयोदद्यात्कुरुजांगले तत्पुण्य
लभतेमाघेगोपीचंदनदानतः १३ योमाघेवैश्वदेवार्थंतंदुलानिददातियः पूर्णायुष्यमवाप्नोतिनरकंनैवगच्छति १४ घृतप्रस्थंतुयो
दद्यान्माघेमाधववल्लभे अलक्ष्मीमपमृत्युंचजयेद्दानसंशयः १५ तिलदीपंतुयोदद्यात्पूर्णायांविष्णुमंदिरे कालमृत्युंजयत्याशुमधु
सूदनशासनात् १६ योदद्याद्वस्त्रदानंतुशीतार्तायद्विजातये पूर्णायुष्यमवाप्नोतिविष्णुलोकंचगच्छति १७ तांबूलंप्रत्यहंदद्यान्माघेमा
सिद्विजातये दारिद्र्याप्तोविमुक्तोमहदैश्वर्यमाप्नुयात् १८ योदद्यात्तिलपात्रंतुमाघस्नानपरोनरः निर्धूतसर्वपापःसन्ग्रहपीडांव्यपोह
ति १९ योमाघेनुवहिःस्नात्वामाधवस्यमहात्मनः यःकुर्यान्महतींपूजांनपुनर्जायतेभुवि २० रंभाफलैरिक्षुदंडैर्धूपैःपुष्पैर्मनोरमैःस
कृद्धूपूजितोविष्णुःपूजितःकोटिवत्सरं २१ एकस्मिन्वादिनेयस्तुप्रातर्माघेजलाप्लुतः सणश्रुत्वाहरेर्दिव्यांकथांश्रोत्रमनोरमां २२ स
र्वाघौघैर्विनिर्मुक्तोविष्णोःसायुज्यमाप्नुयात् अत्राप्युदाहरंतीममितिहासंपुरातनं २३ यच्छ्रुत्वामुच्यतेपापैःपूर्वजन्मसमार्जितैः पुरा
तुद्रविडदेशेनामलुब्धकोलोककंटकः २४ सदापुवनवासीचकालमृत्युरिवापरः पक्षिणश्चमृगांश्चैवमत्स्यान्कूर्मांश्चकर्कटीः २५ पन्न
गान्मूषकांश्चैवगोधानूखरपदेहिनः जालैःशस्त्रैश्चगालैश्चभल्लुमुक्तैःशिलाकरैः २६ खनैर्वंधनलेपैश्चतथाफूत्कारलोष्टकैः
सारमेयैःसहचौरैर्हत्वाजीवनमापसः २७ पांथकान्वाधतेनित्यंचौरवृत्तिर्धनुर्धरः ग्राम्यान्पशून्वहिर्नीत्वागवादीनप्यहर्निशं २८ ह

त्वास्त्वहत्तिमकरोत्पापात्मालुब्धकोप्ययं वृत्तिहीनस्तथाप्यासीन्महत्ताकर्मणाधमः २९ कदाचिन्माघमासेतुप्रातर्मत्स्याभिकांक्ष
या सरयूपवनेरम्यपुण्यक्षेत्रेकुटीरके ३० उपविश्यजलेजालंगलग्राहीविसृज्यच प्राप्तंप्राप्तंगृहीत्वातुपुनरादातुमिच्छति ३१
प्रातःस्नातुंतदाजग्मुर्ब्राह्मणाब्रह्मवादिनः सरयूंतुमहापुण्यांमाघेमकरगेरवौ ३२ तस्यांस्नात्वामहापुण्याः कालंक्रमनिवर्त्य
च तत्तीरेप्यश्वत्थमूलेतुसम्यगभ्यर्च्यकेशवं ३३ गालवाख्यमुनेस्तेतुशुश्रुवुश्चहरेःकथां तदाचमर्कटःकश्चित्सारसश्चविहंगमः ३४
शाखेउभौसमाश्रित्यतदागत्यैवतिष्ठतः श्रुतानाभ्यांकथादिव्याक्षणंकर्मानुरोधतः ३५ क्षणंज्ञानंतयोरासीत्तिर्यग्योनिगयोरपि॥
पश्चात्स्वभावचांचल्यात्प्लुत्वैवमर्कटस्तदा ३६ शाखानुसारसाक्रांतासारसग्रहणेच्छया गृहीतामर्कटेनापिपक्षीपक्षौविधूयच ३७
साकंपपातहरिणाप्राप्तनद्याजलेतदा जलेनिमग्नौचमृतौतदासारसमर्कटौ ३८ विमानंपन्नगज्योतिरारूढौदिव्यरूपिणौ गा
यमानौचाप्सरोभिर्लुब्धदृष्टिपथंगतौ ३९ तौदृष्ट्वालुब्धकःपापीविस्मयोत्फुल्ललोचनः निहत्यदुष्टभावेनगालवंपर्यपृच्छत ४०
मुनेदृष्टंमयाश्चर्यंमत्स्यानादातुमिच्छता शाखामृगःखगश्चाथदेवाद्धसेउभेगतौ ४१ क्षणंस्थितौतयोरन्यामर्कटःप्लुत्वैवतदा
जग्राहसारसंत्वापिनेनसार्द्धंपपातच ४२ युगपत्तौजलेमग्नौयानारूढौदिवंगतौ तौदृष्टोविस्मितोभूत्वादुष्टभावंविसृज्यच ४३
तत्रष्टुकामोविप्रेन्द्रनवातिक्रमुपागतः कौतौपुराखगहरीकेनवाकर्मणाभुवि ४४ तिर्यग्योनिंसमापन्नामुक्तौकेनचकर्मणा
तच्छुश्रूषोश्चश्रद्धालोःप्रच्छतोवदविस्तरात् ४५ लुब्धकस्यवचःश्रुत्वागालवोमुनिसत्तमः तमुवाचमहात्मानंपश्चात्तापमुपेयु
षं ४६ पश्यतामेवसर्वेषांस्नानार्थंसमुपेयुषां शृणुलुब्धकवक्ष्यामितयोर्ज्ञातमंजसा ४७ स्वयंपंडितमान्योयंमर्कटस्तुपुराद्विजः॥

पैठीनसिकुलीनोयंमर्कटः कनकाह्वयः ४८ संत्यज्यापरकर्माणिशृण्वतांचहरेःकथां निंदांचक्रेद्विजेंद्राणांहासपूर्वंदुराग्रहः
४९ परित्यक्तानिकर्माणियैर्नित्यान्यपिपापिभिः कथाकथेत्यहरहद्दन्तिपंडितमानिभिः ५० मूढानेतान्महाश्चर्यंवदंतिब्रह्मवा
दिनः हासंकरोत्यनुदिनंतेषांदोषानुदीरयन् ५१ उत्काचानेनवदतिसभामध्येदुराग्रही नैनेषांसंततिःक्वापिपापघ्नीत्यनुकीर्त्ति
ता ५२ तेनदोषेणपापीयान्ब्रह्मकल्पत्रयेपिच नारकीर्यातनांभुक्त्वातिर्यग्योनिशतंनच ५३ भूत्वाभूत्वापुनश्चायंमर्कटीयोनिमा
श्रितः माघेतुदीपदानेननतस्मिन्नेवतुजन्मनि ५४ जन्मन्यस्मिन्स्मरणंप्राप्तापूर्वजन्मस्मृतिंहरेः शाखाग्रेवसताचापिश्रुत्वाचेमांकथां
शुभां ५५ येकुर्वंतिकथोपेक्षांदृष्ट्वापंडितमानिनः तिर्यग्योनिसहस्रेषुजायंतेतेनराभुवि ५६ प्रसंगानुप्रसंगेनप्रसंगायसमागतः तदा
नींतुहरिंस्तुत्वापश्चात्तापंस्मरणंययौ ५७ पुनश्चयोनिजाद्दोषाच्चांचल्येनविदूषितः पुप्लुवेविहगग्राहीतेनसाकंपपातच ५८ प्रातर्मा
घेजलेदैवान्निमज्यचमृतिंगतः जातिस्मरत्वास्मरणंभूत्वावाच्यमानांहरेःकथां ५९ प्रातर्माघेजलस्पर्शान्मुक्तोयंदिवमागतः स्व
त्रबंधुः सारसोयंसदाभोगेषुलोलुपः ६० वैशाखीकार्तिकीमाघीनस्नातानेनलुब्धक अस्नात्वाअप्पदत्वाचएतास्तिस्रस्तिथयोमुना
६१ किमुतान्याश्चतिथयोवृथानीताश्चकिंब्रुवे कदाचिदघ्नतः स्नातमाघेवमासिवैद्विजं ६२ ब्राह्मणाभो[illegible]पुण्यस्यास्य
प्रभावतः जातिस्मरःसदेहेस्मिन्नतस्माद्दोषात्कुयोनिता ६३ अयंशुश्रावशाखाग्रेमाघमाहात्म्यमुत्तमं निर्वेदस्मरणंप्रापदपूर्वज
न्मकृतंस्मरन् ६४ विधिनामर्कटग्रस्तः प्रातर्माघेजलेमृतः पापान्मुक्तोविहंगोथयानारूढोदिवंययौ ६५ एतत्सर्वंसमाख्यातंल
ब्धगच्छयथासुखं श्रुत्वातद्दीरितंव्याधः पुनर्गालवमब्रवीत् ६६ जन्मप्रभृतिपापीयानहंहिंसापरायणः नकिंचिदपिजानेहंसु

मा॰ वाहृतं नैवमत्कृतं ६७ पापाचारस्यमेमुक्तिः कथंवास्यान्मुनीश्वर कियद्वावर्तते चायुरेतन्मेवदसुव्रत ६८ इतितुब्धवचः श्रु...



बोवाक्यमब्रवीत् इदानींसर्पदष्टोसि नजानास्यन्यचिंतया ६९ तेमुहूर्तद्वयादूर्ध्वंमरणंचभविष्यति इदानींमाघमासस्य...
शुक्लात्रयोदशी ७० कालश्चप्रातरेवायंतस्माच्छीघ्रंनदींव्रज संस्मृत्यमाधवंदेवंकुरुस्नानंयथाविधि ७१ पश्चान्मदं...
कथांविशेषोर्महात्मनः पुत्रमित्रकलत्रादौममतांत्यजचेतसा ७२ हरौचित्तंसमाधायभक्त्यात्यजकलेवरं मुक्ति... भविता नूनंमा
धवस्यप्रसादतः ७३ इतितद्वचनंश्रुत्वागालवस्यमहात्मनः ततोहृष्टमनाभूत्वास्नात्वानद्यांयथाविधि ७४ माधवेमनआवेश्यगा
लवेनगुरौतथा कथांतदीरितांश्रुत्वानाकरोद्बाह्यचिंतनं ७५ जहौकलेवरंतीर्थेक्रमात्कालउपस्थिते विमानंदिव्यमारुह्यजगामह
रिमंदिरं ७६ खगोहारिर्लुब्धकश्चदुर्मता अपितेत्रयः माघस्नानस्यमाहात्म्यात्कथायाश्रमधुद्विषः ७७ पश्यतामेवसर्वेषांयोगि
नामपिदुर्लभां गतिंप्रापुर्महात्मानः क्षणेनैकदिनेनच ७८ कुटीरस्थजनाः सर्वेगालवंमुनिपुंगवं तुष्टुवुर्विविधैःस्तोत्रैर्विस्मयोत्फुल्ल
लोचनः ७९ तंप्रत्यूचुर्महात्मानंसंतोषाकुलचेतसः माघस्नानप्रभावश्चकथायाअपिवैहरेः ८० प्रत्यक्षेणैवदृष्टोभूच्चित्रंचित्रमहो
वत अयमर्थःपुरास्माकंशास्त्रगम्योभवन्मुने ८१ प्रत्यक्षमभवन्नूनमधुनात्कृपयातव समागमोहिमहतांसद्यःक्षेमायकल्पते ८२
सर्वेधर्मामहद्भिश्चज्ञेयाःसूक्ष्माःसहस्रशः नैपिशास्त्रकथालापैर्व्यक्तीकुर्वंतिसज्जनाः ८३ सूपदिष्टाश्चतेधर्माजनानेवशुद्धचेतसः
पुनंतिनात्रसंदेहोनपुनंतिदुराग्रहान् ८४ पुनश्चश्रोतुमिच्छामोमाघमाहात्म्यमुत्तमं यद्यदस्तिविशेषोत्रतत्तद्वदद्यानिधे ८५ ण्मः
नानेनसदृशोधर्मोनानेनसदृशंतपः नानेनसदृशोयज्ञइतिनोमतिरुत्तमा ८६ बहुशःश्रृण्वतांनांचतृप्तिर्नाद्यापिविद्यते कोनुतृप्येत

भगवत्कथालापामृतंपिबन् ८७ मनांसिचप्रसन्नानि पापान्यपिगतानिच गालवस्यमुनेःसंगात्संशयाअपिछेदिताः ८८ शुश्रूषूणां
चशिष्याणांवदविष्णोःकथांशुभां इतिश्रीवायुपुराणेमाघमाहात्म्येचतुर्विंशोध्यायः २४ गालवउवाच यःस्नातिमाधवप्रीत्यैप्रात
र्माघेबहिर्जले संपूज्यमालतीपुष्पैर्विष्णुलोकेमहीयते १ गीतापाठंतुयःकुर्याद्धरिमाघेजलाप्लुतः तस्यपुण्यफलंवक्तुंविष्णुनापि
नशक्यते २ विभूतिंविश्वरूपंचयश्चाध्यायद्वयंपठेत् तस्यपुण्यस्यविस्तारंवदतोमेनिशामय ३ विभूतेर्विश्वरूपस्ययःपादंपठतेनरः
माघेपापाद्विनिर्मुक्तोदिविदेवैश्चगीयते ४ श्लोकार्द्धंपठतेयस्तुमाघेमासिजलाप्लुतः ससप्तकुलमुद्धृत्यस्वर्गलोकेमहीयते ५ प्रातः
स्नात्वाशुचिर्भूत्वायःपादंपठतेनरः सचैकविंशतिकुलैःसत्यलोकमवाप्नुयात् ६ माघेस्नात्वातुयःकुर्यात्पाठंश्लोकद्वयस्यच एकेनपा
पनाशःस्याद्द्वितीयान्मोक्षमाप्नुयात् ७ माघेस्नात्वाहरिंपूज्ययस्तुश्लोकत्रयंपठेत् एकेनसंसृतेर्नाशोसायुज्यंचद्वितीयतः ८ मुक्तिं
ददातिवैविष्णुरृणीशेषेणमाधवः माघेचाध्यायपठनेप्रातःस्नानेनचोषसि ९ तस्यपुण्यफलंवक्तुंनालंकल्पशतैरपि तच्चाध्या
यद्वयंनित्यंप्रातःस्नात्वातुयःपठेत् १० ब्रह्मादेवैरपिदेवैश्चविष्णुनाशंभुनातथा नशक्यतेफलंवक्तुंमहाकल्पशतैरपि ११ माघस्ना
नेहरेःपूजागीतापाठःस्त्रयंयदि एकस्मिन्दिवसेयस्यमुक्तिस्तस्यकरेस्थिता १२ स्नात्वातुमृदमालिप्यप्रातर्माघेबहि[illegible] सहस्रना
मभिःपूज्यःकृतकृत्योभवेन्नरः सहस्रनामपठनंपूजाकालेतुयःपठेत् १३ तद्दर्शनाद्भवेन्मुक्तिःकिमुतस्येमहात्मनः १४ नाम्नावै
केनवायस्तुपूजयेन्मधुसूदनं कोटिसंवत्सरंविष्णुःपूजितस्तेननिश्चयः १५ योवानाम्नांसहस्रेणस्तोतुमिच्छतिमाधवं तावतानेनवै
पुंसास्तुतस्स्यान्नसंशयः १६ एकंश्लोकंपठेद्यस्तुनित्यंभागवतोद्भवं तस्यपुण्यफलंवक्तुंकःशक्तोदिविवाभुवि १७ पूजयेन्माधवंदेवंप्रात

मींघेजलाप्लुतः पठन्भागवतंशास्त्रंमुक्तिमेतिनसंशयः १८ गजेंद्रस्तोत्रपठनंकुर्यान्माघेजलाप्लुतः तस्यविष्णुःस्वयंप्रीणन्ददातीष्टान्मनोर
थान् १९ श्लोकार्धंश्लोकपादंवानित्यंभागवतोद्भवं यःपठेत्प्रातरुत्थायसजीवन्नेवमुक्तिगः २० यद्गेहेलिखितंशास्त्रंपुण्यंभागवतंशुभं वर्ततेत
द्गृहंपुण्यंसर्वक्षेमाधिसंमतं २१ यःप्राक्सूर्योदयेस्नात्वाकृत्वामाधवपूजनं माधवस्तवराजेनपादैःस्तौतिहरिंसकृत् २२ विधूयसर्वपापानिकृत्वा
न्युद्धत्यसर्वशः सवितुर्मंडलंभित्वाविष्णोःसायुज्यमाप्नुयात् २३ माधवस्तवराजंतुमाघेनित्यंपठेन्नरः तेनेष्टंतेनदत्तंचतेन[illegible] २४ विष्णो
र्नामसहस्रस्यद्विरावृत्त्यानुयत्फलं तत्फलंसमवाप्नोतिमाधवस्तवराजतः २५ ऋषयऊचुः स्तोत्रमेतन्महापुण्यंपठनीयंद्विजोत्तमः
माधवस्तवराजंतुश्रोतुमिच्छामहेवयं २६ किंफलंतस्यपठनेकेनलोकेप्रकाशितं गालवउवाच पादौप्रक्षाल्यवाचम्यकृतन्यासःकृ
तासनः २७ स्तोत्रमेतत्पठेन्नित्यंमाघेमासिविशेषतः आदौनत्वागुरून्सर्वान्पश्चाद्वामेचपार्श्वके २८ पापंचपुरुषंध्यायेत्कृष्णंदक्षिणह
स्ततः ब्रह्महत्याशिरस्कंचस्वर्णस्तेयभुजद्वयं २९ सुरापानहृदायुक्तंगुरुतल्पकटिद्वयं तत्संयोगपदद्वंद्वमंगप्रत्यंगपातकं ३० उपपा
तकरोमाणंरक्तश्मश्रुविलोचनं खड्गचर्मधरंकृष्णंकुक्षौपापंविचिंतयेत् ३१ नाभिस्थंशोषयेत्पश्चाद्वायुबीजमनुस्मरन् षट्कोणचक्र
गंनालंभगवंतमनुस्मरन् ३२ ततोहृदिकरन्यस्यवन्हिमंडलगंहरिं त्रिकोणचक्रगंरक्तंभगवंतमनुस्मरन् ३३ देहस्थंपापपुरु
षंनिर्दहेद्दग्निनाततः पश्चान्मूर्ध्निकरंन्यस्यस्थितंवरुणमंडले ३४ चतुर्दलेस्फाटिकाभंस्मृत्वाचामृतवृष्टिभिः अप्लाव्यसकलंदेहं
प्राणायामंततश्चरेत् ३५ गायत्र्याचैवमंत्रेणपंचांगन्यासमाचरेत् माधवेतिहृदिन्यस्यन्यसेन्मूर्ध्निचकेशवं ३६ नारायणंशिखायां
चनेत्रयोरच्युतंतथा विष्णवेनमइतिचवदेदस्त्रायफट्ततः ३७ मंत्रमेतत्त्रयोक्तव्यंसर्वपापोपशांतये भुक्तिमुक्तिप्रदंनृणांसर्वरोग

विनाशनं ३८ अच्युतानंतगोविंद प्रणतार्तिविनाशन देहि मे यमनःशुद्धिं त्वन्नामस्मरणाद्धरे ३९ हृषीकेश जगद्व्यापिन्सर्वसा
क्षिन्द्रयानिधे इंद्रियाण्यनुकूलानि सदा धर्मेषु मे कुरु ४० यश्चक्षुषः सूर्यगश्च सूर्याक्षः सूर्यसेवितः दर्शयस्व महाबाहो सदा मे धर्म
पद्धतिं ४१ दिव्यरूपी च श्रुतिस्थो यं सर्वप्रत्ययगोचरः वर्तयस्व कथालापे श्रोत्रे मे श्रुतिबोधितः ४२ नासत्यरूपी भगवान्नासस्थो हरिर
व्ययः नासां मे वर्तयस्वाशु दिव्यं त्वत्पादसौरभे ४३ जिह्वात्मवरुणस्त्वं च माधवानंतशक्तिधृक् जिह्वां नवरसस्वादे वर्तयस्व महाप्रभो
४४ प्राणापानात्मको विष्णुस्त्वक्स्पर्शात्मा महाप्रभुः त्वक्स्पर्शाभ्यां कृतं पापं शमयाच्युत माधव ४५ खस्थः खनामा भगवान्सर्वव्या
पिन्महाप्रभुः त्वत्स्वकाशात्कृतं तं च पापं प्रशमयाच्युत ४६ वायुगो वायुनामा त्वं जगत्स्पर्शव्ययाच्युत वायुभूतात्कृतं पापं शमयाच्युत
माधव ४७ अप्सु स्थितो भवान्विष्णुरसात्मा जीवनप्रदः अप्भूतात्च कृतं पापं शमयाच्युत माधव ४८ तेजस्थितो वह्निनामा स्वयं ज्यो
तिस्त्वमादिकृत् तेजोभूतात्कृतं पापं शमयाच्युत माधव ४९ भूमिस्थितो भूमिनामा जगदाधारकेशव भूमेर्भूतात्कृतं पापं शमयाच्युत
माधव ५० महान्महद्गतो विष्णुर्जगद्धेतुर्जनार्दनः निदानं कर्मणो विष्णोः शमयाच्युत माधव ५१ यश्चाहंकारगो विष्णुर्जगद्देकारिका
श्रयः अहंकारात्कृतं कर्म शमयाच्युत माधव ५२ मनःस्थितः कामरूपी प्रवर्तकनिवर्तकः मनसा तु कृतं पापं शमयाच्युत माधव ५३
बुद्धिस्थो बुद्धिनामा त्वं बोधात्मा हरिरीश्वरः बुध्या तु यत्कृतं पापं शमयाच्युत माधव ५४ वाक्स्थितो वह्निरूपस्त्वं गुणार्थाग्निराश्रयः
वाचा कृतं महापापं शमयाच्युत माधव ५५ हस्तस्थो भगवान्विष्णुर्हस्तगः पुण्यविग्रहः यद्धस्ताभ्यां कृतं पापं शमयाच्युत माधवः ५६ यः
पादस्थो जयंता च्यो भगवान्गरुडासनः यत्पद्भ्यां च कृतं पापं शमयाच्युत माधव ५७ गुह्यस्थितो गुह्यरूपी प्रभविष्णू रमापतिः यत्किंचि मे

नन्तानंतपापंशमयाच्युतमाधव ५८ हरेकृष्णहरेकृष्णशंखचक्रगदाधर सर्वदासर्वतोमह्यं कुरुमाधवरक्षणं ५९ वेदनेत्रमहामीनज
लेवरुणपाशनः यादोगणेभ्योदेवेशकुरुमाधवरक्षणं ६० वामवामनविश्वात्मन्बलिध्वंसिवटोहरे कृपालयस्थलेषुत्वंकुरुमाध
वरक्षणं ६१ त्रिविक्रमत्रिकालज्ञत्रिधामस्त्वंत्रयीमय सर्वाश्चर्यकरव्योम्निकुरुमाधवरक्षणं ६२ महाविष्णोनृसिंहत्वंभवत्रकल्पमहा
नख दुर्गाटविग्रहादिभ्योकुरुमाधवरक्षणं ६३ यद्दंष्ट्रेंदुकलालग्नाकलंकइवमेदिनी वराहाध्वनिमेनित्यंकुरुमाधवरक्षणं ६४॥
शार्ङ्गधन्वमहावीरनारायणपरात्पर प्रमादोत्थान्महादुःखात्कुरुमाधवरक्षणं ६५ अनसूयागर्भरत्नयोगिध्येयात्रिगोत्रज योगोपाय
विहीनस्यकुरुमाधवरक्षणं ६६ सनत्कुमारकपिलहयग्रीवजनार्दन देवहेलनवंधेभ्योकुरुमाधवरक्षणं ६७ समस्तजगदाधारस
र्वदेवभयापह घोरेभ्योनरकेभ्यश्चकुरुमाधवरक्षणं ६८ धन्वंतरेचिदानंदस्वरूपिन्विश्वभेषज अपथ्यजान्महादुःखात्कुरुमाधव
रक्षणं ६९ विजितात्मन्महाशक्तेवलिपत्रत्रपावय द्वंद्वादिभ्योमहादुःखात्कुरुमाधवरक्षणं ७० कृष्णद्वैपायनहरेवुद्ध कल्किशु
भप्रद अज्ञानादिभयान्नित्यंकुरुमाधवरक्षणं ७१ केशवाच्युतगोविंददामोदरजनार्दन प्रातःसंगममध्याह्नेकुरुमाधवरक्षणं ७२
कालसूत्रमहाविष्णोपद्मनाभजनार्दन प्रदोषदुष्टकालेभ्यःकुरुमाधवरक्षणं ७३ श्रीवत्सकांचनश्रीमच्चक्रपाणेभयार्तिहन्नज्ञ
ज्ञानतिमिरान्नित्यंकुरुमाधवरक्षणं ७४ वासुदेवजगद्योनेजितामित्रचतुर्भुज ममाज्ञानकृतात्पापात्कुरुमाधवरक्षणं ७५ वेदसार
जगत्त्राणसत्यवाक्सत्यविक्रम अनृताच्चमहापापात्कुरुमाधवरक्षणं ७६ समस्तपानकध्वंसिन्सर्वावस्थानियामक त्वद्विस्मृतिम
यात्पापात्कुरुमाधवरक्षणं ७७ परानंदपरब्रह्मन्सत्यबोधात्मकाव्यय अध्यानाद्गेमहापापात्कुरुमाधवरक्षणं ७८ सर्वकर्तासर्वस

सिन्शिवरूपशिवप्रद अशिवज्ञानराहित्यात्कुरु माधवरक्षणं ७९ यज्ञकृद्यज्ञभृद्यज्ञयज्ञभुग्यज्ञसाधन क्रियात्यागान्महापापात्कु
रु माधवरक्षणं ८० भक्तप्रियाखिलाधारपुण्यकीर्तेनिरामय अरतेस्तुमहादोषात्कुरु माधवरक्षणं ८१ निरंजननिराकारनिर्गुणानंत
निश्चल गुणत्रयकृतात्पापात्कुरु माधवरक्षणं ८२ क्षेत्रक्षेत्रज्ञतःक्षेत्रिन्क्षेत्रदूरकृपाकर क्षेत्रजाच्च महापापात्कुरु माधवरक्षणं ८३
उत्तिष्ठन्प्रस्वपनाच्छन्विवन्भुंजन्विजृंभयन् यत्पापं क्रियतेतस्मात्कुरु माधवरक्षणं ८४ दाक्षिण्यादर्थलोभाद्वाभयाद्वादुष्टसंगते तथा
कृतान्नाच्च मे पापात्कुरु माधवरक्षणं ८५ आलस्याद्दुष्टभावाद्वामोक्षोपायोनसाधितः अपराधाद्दयासिंधो कुरु माधवरक्षणं ८६ अग
म्यागमनात्पापादभक्ष्याभक्षणाद्विभो अकार्यकरणाद्वापि कुरु माधवरक्षणं ८७ भोगलोल्याद्दुराभ्यासाद्दुष्टानां च समागमात् प्रतिग्र
हाद्दुराचारात्कुरु माधवरक्षणं ८८ अग्नित्यागाद्दुरन्नाच्च संध्याकर्मादिलोपनात् अपूजनाज्जगन्मूर्ते कुरु माधवरक्षणं ८९ एकाद
श्यशनात्पापाद्द्वादश्यां चद्विभुक्तितः श्राद्धकर्मपरित्यागात्कुरु माधवरक्षणं ९० वेदमंत्रंशाद्व्रतभ्रंशात्कर्मभ्रंशाद्दुराग्रहात् निंदाद्दु
रुसाधूनां कुरु माधवरक्षणं ९१ अनाश्रयादनध्यायाद्दानाद्दत्तुर्जानक अविश्वासाद्दुरोनित्यं कुरु माधवरक्षणं ९२ दूषणात्कुलक
न्यानां विवाहस्य च विघ्नतः आशाच्छेदान्महाबाहो कुरु माधवरक्षणं ९३ भार्याद्वयपरित्यागादकस्माद्दुष्टचेतसा परदाराभिमर्शाच्च कु
रु माधवरक्षणं ९४ मेरुमंदरसमात्पापाद्द्युपपापाधपातकात् ब्रह्महत्यादिपापाच्च कुरु माधवरक्षणं ९५ इतीदं कीर्तितं पुण्यं महापा
तकनाशनं दारिद्र्यनाशनं धन्यं आयुष्यं च यशस्करं ९६ यद्इदं पठते नित्यं माघस्नाने द्विजोत्तमः यन्माघे च कृतं पुण्यं कोटि कोटि गुणं भ
वेत् ९७ नित्यं प्रातः पठेन्मर्त्यः शुचिः शांतो जितेंद्रियः देवैरपि स पूज्यः स्यात्सर्वलोकोत्तरो नरः ९८ माधवस्तवराजं तु यः पठन्नियतः ।

शुचिः सपुमांस्त्रिषुलोकेषु तएवस्याज्जनार्दनः ९९ पठन्स्तवराजस्य नग्रहादिव्यथाभवेत् माधवस्तवराजोयंपापगुल्मदवानलः १००
धर्मादिमोक्षपर्यंतंपुरुषार्थस्यकारणं यःपठेत्पुण्यकालेषुस्तवराजंमहामनुं १०१ कल्पकोटिसहस्रेषुमोदतेविष्णुमंदिरे इति श्रीवायु
पुराणेमाघमाहात्म्येपंचविंशोध्यायः २५ गालवउवाच एतत्स्तोत्रंमहापुण्यंवशिष्ठायमहात्मने वेधाउपदिदेशेदंआत्मायत्मजंशो
कनः १ कुतोस्याद्भवः कुतोवाभूत्तत्रशोकोब्रह्मिष्ठायमहात्मने शोकनाशंकथमभूदुपदेशात्प्रजापतेः २ एतदाचक्ष्वनोब्रह्मन्शु
श्रूषूणांमहामने गालवउवाच कोपाशनोमहातेजाविश्वामित्रोमहातपाः ३ ब्रह्मर्षित्वंसमासाद्यवसिष्ठाधिककांक्षया तपस्तेपेम
हाघोरंदिव्यवर्षायुतंततः ४ वसिष्ठादधिकंमेनेह्यात्मानंचतपोबलात् कदाचिदिंद्रसदसिदेवेंद्रोदेवसेवितः महदैश्वर्यसंपन्नोदेवे
द्रोवाक्यमब्रवीत् भोभोदेवाःसमासीना ऋषयःशंसितव्रताः ५ कोजीवेष्वधिकोजीवः कोवाब्रह्माभिधोमतः ब्रह्मर्षीणांचकःश्रेष्ठो
देवर्षीणांकउत्तमः ६ मयापृष्टामहात्मानोब्रूतप्रश्नस्यचोत्तरं सदस्येवंमहात्मानोबलसूदनचोदिताः ७ नारदंचोदयामासुर्दातुंप्रत्यु
त्तरंद्विजाः तेराज्ञप्तोमहाप्राज्ञोनारदोवाक्यमब्रवीत् ८ सचसर्वसभामध्येप्रांजलिःसत्यभाषणः नारदउवाच तिर्यक्कृमिमनुष्येषुभू
मिपेषुबुधेषुच ९ भारतीरमणश्रेष्ठोजीवेभ्योयःपरःपुमान् परंब्रह्महरिःसाक्षाद्देवदेवोरमापतिः १० ब्रह्मर्षीणांवसिष्ठोयंवेदवेदां
गपारगः देवर्षीणामहंविद्धानिमित्तंमेनिश्चयं ११ सभ्यास्तुतुषुः सर्वेश्रुत्वानारदभाषितं अयमर्थोवेदसारःसाधुसाध्वितिचाब्रु
वन् १२ विश्वामित्रस्तुतच्छ्रुत्वावसिष्ठाभ्युदयंरुषा उत्तस्थौचसभामध्यात्ज्वलदोष्ठोविनिंदयन् १३ क्रोधात्तात्तप्यमानस्तंनारदंमन्य
भाषत यद्यपीदमृतंप्रोक्तंहरिर्ब्रह्मेतिनान्यथा १४ तथाजीवाधिकोवायुरेतत्सत्यंनसंशयः ब्रह्मर्षीणांवसिष्ठश्चदेवर्षीणामहंत्विति १५

चित्रमेतद्द्वयंप्रोक्तंऋषिणानेनसंसदि कथमात्मप्रशंसावाकृतापंडितमानिना १६ मार्कंडेयेस्थितेप्यस्मिन्कल्पस्थायिनिसंसदि
विद्यमानेसभामध्येभृगौब्रह्मर्षिसत्तमे १७ कथमश्लाघ्यऽनात्मज्ञवसिष्ठेनाभिमानिना नारदःसत्यवादीतिप्रसिद्धभुवनत्रये १८ आत्मानं
वाकथंस्तौतिसनकादिषुसत्स्वपि ब्रह्मर्षित्वंमयाप्राप्तंतपसादुश्चरेणच १९ किंनजानातिलोकोयंप्रथितेभुवनत्रये तपसोभूरिशःश
क्तिर्ब्रह्मणासमविक्रमः २० किंवशिष्ठोनजानातित्रिशंकुविषयेपिमां स्पष्टोप्यर्थोनभात्येवदृष्ट्यापंडितमानिनां २१ त्वंनजानासिकिंविप्र
नारदेतिचविश्रुतः त्वयानहिस्मृतंपूर्वंविचार्याद्यपुनर्वद २२ इतितद्वचनंश्रुत्वाप्रहसन्तमुवाचह भवतश्चवशिष्ठस्यविवादंतुपितामहः स्व
नैवैववचसासद्योहरिष्यतिनसंशयः ब्रह्मणःसदनंगच्छवसिष्ठेनापिसंयुतः २४ सएववेत्तासर्वस्यशृणुगाधितनूद्भव इतितद्वचनंश्रु
त्वादत्तोत्तारणागद्गदः २५ ॐमित्युक्त्वावसिष्ठंतंसमाहूयदतंद्रितः वसिष्ठोपिसहानेनविश्वामित्रेणधीमता २६ साकंययौब्रह्मसदो
विस्मयोत्फुल्ललोचनः अपश्यतांमहात्मानौब्रह्माणंमुनिसेवितं २७ प्रणामंचक्रतुस्तस्यलोकस्रष्टुर्महात्मनः जानन्नपिस्वयंब्रह्माम
नोन्यप्रच्छसन्मनाः २८ किमर्थमागतावत्रभवंतौलोकपूजितौ युवयोराननेखिन्नेवदतंकारणंत्विति २९ विश्वामित्रस्तदाचाहब्रह्मा
णंताम्रलोचनः अन्योन्याधिक्यबुद्ध्याह्यौविवादस्योपरस्परं ३० नवाभ्यासंसमापन्नावावांत्वांद्रष्टुमीप्सितौ यच्चयावच्चलोकानांवे
त्तारंनारदोब्रवीत् ३१ निर्धार्यसत्यमेवोक्त्वाकलहंचावयोर्हन विश्वामित्रवचःश्रुत्वाब्रह्मावाक्यमथाब्रवीत् ३२ विवादनिर्णयःका
र्यस्त्रिभिःसाक्षिभिरन्वितः तस्माच्छेषंतथासूर्यंअगस्त्यंचसमाहूय ३३ इतिब्रह्मविनिर्दिष्टोविश्वामित्रोगमद्द्रुतं नागलोकमवाप्याथ
नागेंद्रंमुनिपुंगवः ३४ अन्योन्याधिक्यविषयेवसिष्ठस्यममापिच विवादोभून्निर्णयार्थंसाक्ष्यर्थेहिसमाहूये ३५ इतिब्रह्मविनिर्दिष्टस्त्वं

तिकमगान्मुनिः तस्मात्त्वागच्छ त्वं शेषसत्यं ब्रूहि समागतः ३६ इति तद्वचनं श्रुत्वा विश्वामित्रमुवाच सः न मया शक्यते गंतुं दृष्टो मूर्द्धसहस्र
तः ३७ लोकभारोद्वहे राज्ञा गच्छ त्वं विप्र ते सुखं पश्चात्सूर्यं ययौ योधी मानितिते न निराकृतः ३८ सूर्यमप्याह्वयांचक्रे स्ववृत्तांतं निवेद्य च सो
प्याह न मया शक्यं गंतुं लोकहितेच्छया ३९ नियुक्तो हरिणा पूर्वं यज्ञाद्यर्थं मुनीश्वर कालज्ञानाय जगतां तस्माद्गच्छेति तं मुनिं ४० अग
स्त्यं स ययौ योधी मान्स्वरूपेणापि निराकृतः मुनींद्रमाहूयांचक्रे निवेद्यात्मीयसंस्थितं ४१ अगस्त्योपि तमाहेदं मुने पूर्वं क्षितिस्त्वियं हिरण्याक्ष
णादैत्येन कष्टं वसुमाविकुंच्यते ४२ नीता पश्चाद्वराहेण हत्वा तं पुनरस्तु ना प्रसार्य स्थापिता भूमिः पूर्ववद्धरिणा जसा ४३ संस्काराल्कथ्वंदू
यः पुनः संकोचिता क्षितिः लोष्ठवत्स्थापना याहं दिग्गजा अपि विष्णुना ४४ दक्षिणोत्तरतस्तेन स्थापिता वयमत्र हि तत्राहं दक्षिणाशायां
स्थापितोस्यां व्रजेति तं ४५ निराकृतस्ततस्तेन ब्रह्मलोकं पुनर्ययौ एतद्वृत्तांतमखिलं ब्रह्मणोथन्यवेदयत् ४६ तेनागता इति श्रुत्वा स्वा
धिकारेषु संस्थिताः वसिष्ठं प्रेषयामास मंत्रीनाहूय सत्रिभिः ४७ एतैर्महात्मभिः शीघ्रं समागच्छेति वै पुनः सोपि शेषांतिकं गत्वा नमाग
च्छेति चाब्रवीत् ४८ स्वाधिकारं निवेद्याथ न शक्यमिति सोब्रवीत् तदेतद्वचनं श्रुत्वा वसिष्ठो ब्रह्मनंदनः ४९ स्वदंडं स्थापयामास लो
कोद्वहनकर्मणि दंडेन च धृते लोकभारे तेन सहाययौ ५० ततः सूर्यं समासाद्य नमागच्छेति चाब्रवीत् स्वाधिकारं निवेद्याथ न शक्य
मिति सोब्रवीत् ५१ तच्छ्रुत्वा प्रहसन्मंदं वसिष्ठो ब्रह्मनंदनः उदयादिनिदानंत्वेपरीं सूर्यरथे क्षिपत् ५२ पटेनैव यथापूर्वं सूर्यकृत्यं कृ
ते सति सहाययौ चंशेषेशा सूर्यो लोकपितामह ५३ दक्षिणाशां ततो गत्वा मुनिं प्राप्य निवेद्य च स्ववृत्तांतं यथापूर्वं नमागच्छेति चाब्रवीत् ५४
स्वाधिकारं निवेद्याथ न शक्यमिति सोब्रवीत् अगस्त्यस्याधिकारेषु स्थापितः स्वकमंडलुः ५५ कृते चारकपात्रेण स्वकृत्ये समुनिस्तथा

सार्कंचसूर्यशेषाभ्यांब्रह्मलोकमथाययौ ५६ त्रीनाहूयययौशीघ्रंवसिष्ठोब्रह्मणःपदं उपवेश्याथतान्ब्रह्माविवादंचतयोरथ ५७ निवेद्यनि
श्चितंब्रूतेत्येतानाहपितामहः त्रयस्तेब्रह्मणादिष्टाविश्वामित्रमथाब्रुवन् ५८ नशक्तिस्तेपुराचासीत्तस्मादाह्वानकर्मणि अस्मद्वाणनयंवो
ह्वाऽस्मानाहूयसमाययौ ५९ अनेनयुवयोर्विप्रस्फुटमन्यतरस्यच आधिक्यंतंविचार्यैवमेनंपृच्छपुनर्मुने ६० ब्रूहिसत्यंत्वमेवेतिव्रीडयानिश्च
लोऽभवत् तूष्णींभूतेगाधिपुत्रेह्रियानम्रमुखेपिच ६१ ब्रह्मणाचाप्यनुज्ञाताययुःस्थानंयथाक्रमं अंतर्जाज्वल्यमानःसन्विश्वामित्रोय
योभुवं ६२ पितरंचानुमंत्र्याथवसिष्ठःस्वाश्रमंययौ विश्वामित्रस्ततःक्रोधाद्वसिष्ठस्याहितंस्मरन् ६३ ब्रह्मणश्चप्रतीकारंचिंतयन्तपसिस्थि
तः तपसस्तुमहिम्नैवप्रतिसृष्टिंचकारह ६४ एतस्मिन्नंतरेकश्चिद्राक्षसोलोककंटकः तपसातोषयामासशंकरंलोकशंकरं ६५ शंकरेणि
विचार्याथपापिष्ठायेदमब्रवीत् देह्याहारंवसिष्ठायदुष्टमानुषमांसतः ६६ स्वेनैवकर्मणासर्वेगतिंस्वांयांतिनिश्चयं त्वद्भक्तिर्भवितानेनक
र्मणानेननिश्चयं ६७ इतितस्मैवरंदत्वातत्रैवांतरधीयत विश्वामित्रस्ततस्तुष्टोवसिष्ठाहितकांक्षया ६८ तस्मैददौवरंपूर्वंकरिष्यतिनि
पोमहत् राक्षसोमोक्षमुद्दिश्यकश्चिल्लोकस्यकंटकः ६९ जरामरणराहित्यंमोक्षंप्रापदुराग्रहात् मुक्तिगोह्यखिलानांयोब्राह्मणाद्याः
सहस्रशः ७० आक्रम्यानुभविष्यामितास्सहंदेषुराक्षसाः इतितद्दुष्टमनसातपोदुश्चरमाचरत् ७१ स्थास्यत्यचिरकालेनतंमार्गाङ्क्रश
यन्नहं ददाम्यस्मैवरंक्रूरंतेनेहंतेभविष्यति ७२ तस्मात्तथावरंचास्मैशंकरोदात्सराक्षसे सराक्षसोलब्धवर श्चचारभुविदुष्टधीः ७३
उपायात्सवसिष्ठायदातुंमानुषमामिषं विश्वामित्राश्रमंप्राप्तःसहृत्तांतमचोदयत् ७४ तच्छ्रुत्वावचनंपश्चात्संतोषाकुलमानसः आग
तंराक्षसंघोरंगुणायंसोब्रवीन्मुनिः ७५ नृपःकल्माषपादोस्तिसप्तद्वीपवतीशिता गृहंगच्छभवानास्यसूदःपाकविशारदः ७६ अचिरेणास्य

कालेनपितुः श्राद्धंभविष्यति पुरोहितोवसिष्ठश्चतत्रागच्छतिनिश्चयं ७७ तदात्वंकपटेनैवदेहिमानुषमामिषं ततोमनोरथस्तेनुभविता ना त्रसंशयः ७८ इतितेनसमाज्ञप्तोजगामाथसराक्षसः कल्माषपादसदनंसूदरूपीचदुष्टधीः ७९ पश्चादल्पेनकालेनतेनाहूतःपुरोहि तः वसिष्ठःश्राद्धदिवसेह्याजगामनृपालयं ८० ततोमध्यान्हवेलायांकिंचिन्मंदायितेरवौ ब्राह्मणान्भोजयामाससनृपःश्रद्धयान्वितः ८१ तदासराक्षसःपापीवसिष्ठायमहात्मने मेध्येपंक्तामिषस्यायंदुष्टंमानुषमामिषं ८२ ददौपश्चाद्वसिष्ठोपिज्ञात्वादुर्गंधतोशुचि मां संमानुषमित्येवंकोपात्ताम्रविलोचनः ८३ शापंददौनृपायास्मैत्वयायद्दत्तमामिषं मानुषत्वाद्भवाशुत्वंराक्षसोमानुषाशनः ८४ मुनेः कोपंनृपस्यापिज्ञात्वासूदःपलायितः नमयेदंकृतंकर्मवृथाशापंददौमुनिः ८५ अविचार्यपुनस्तस्मैपुनःशापंददाम्यहं इतिचांज लिनानीरमादायोत्थितआशुवै ८६ भार्यानिवारयामासगुरुरित्यन्वबोधयत् भार्यानिवारितोनीरंपादयुग्मेव्यचिक्षिपत् ८७ तेनदग्धौ चनतयातौअभूत्कल्माषपादतः शापंदत्वावसिष्ठोपिस्वाश्रमंप्रत्यपद्यत ८८ ततःसराक्षसोभूत्वावनेचासीत्सभूमिपः राक्षसीयोनिमाप न्नंविश्वामित्रस्तुभूमिपं ८९ योनिदोषाद्दुष्टबुद्धिंबोधयामासचित्रधा दुर्जनादंडसाध्याहिनगुणेनकदाचन ९० अयंस्वभावतोदुष्टो मुनिश्चुद्रदुराग्रही विद्यमानासुसंपत्सुवृथामानोवियोजितः ९१ त्वयाद्यास्यततोदंडःकार्यःसम्यक्‌नसंशयः पुरानेननृपःशप्तस्त्रिशं कुश्चपृथुश्रवाः ९२ चंडालत्वंसमापन्नोदिविदेवैर्निराकृतः मच्छिष्योभूत्तदासोपित्तस्मैस्वर्गप्रकल्प्यच ९३ स्थापितोदिविचाद्यापिद्द श्यतेचांबरेजनैः गत्वातदाश्रमंरात्रौनस्मात्वंपृथिवीपते ९४ शक्तिज्येष्ठान्शतंपुत्रान्भक्षयेतिचबोधितः योनिदोषात्सभूपोपिरा त्रौगत्वातदाश्रमं ९५ समाधिस्थोवसिष्ठोपितत्पुत्रांश्चैवनिद्रितान् भक्षयामासपापात्मासर्वानेवमहाबलः ९६ अरुंधतीतदारोदाथलु

ठंतीवहुशोभुवि आर्तस्वरंततः कृत्वावसिष्ठोब्रह्मनंदनः ९७ पुत्रान्मृतांस्ततोदृष्ट्वाशोकानलविदूषितः मूर्छामापमुहूर्तेनपुनःशोक
दुरोदह ९८ किमर्थंविधिनादत्तापुत्रसंपत्सुखावहा हृतास्तेनैवविधिनादयाहीनेनवाकुतः ९९ तथैवजन्मतःशुद्धाःसदाचारादया
लवःआयुःक्षयेनपश्यामिकारणंचविधिंविना १०० शक्तभगोदयोजातस्ततोनिष्क्रियाकुरु गच्छभद्रकशार्थंत्वमयासाकंनदीव्रज १०१
नाप्रियंचोदितंक्वापिमाशयामिकदाचन कुतोवास्तेहविच्छेदःकुतोलोकांतरंगतः १०२ शून्यानीवकुटीराणिकथंपश्यामिचान्वहं
कालोमध्याह्निकोजातःस्नात्वागच्छगृहान्प्रति १०३ भुंक्ष्वमांवाधनेसुद्देकोवेत्तामांवदिष्यति किंभुक्तास्त्वकुमारामेकानुद्दिश्यवदाम्यहं
४ निर्बाधंवर्ततेचानर्लुठबालेस्थलंत्विदं चसुदीनेनविधिनादुर्जनालोककंटकाः ५ नदृष्टानिकदस्यामेपुत्रादृष्टिपथंगताः पतन्लुठ
तिभूमौसःशिरोवक्षस्तताडच ६ प्रक्षिपन्पांसुपिंडानिहृथानेत्रेतिताडयन् कृटीरण्यथनेषांवैदृष्ट्वादृष्ट्वापुनःपुनः ७ तत्रतत्राहूयाच
क्रेपुत्रपुत्रेतिवैरुदन् कुंडलानिचदिव्यादिगृहीत्वाह्वयतिस्मरन् ८ क्षणान्मूर्छागलद्धाष्पोरात्रिशेषमनीनयत् बांधवाःप्रातरागत्य
सांत्वेस्तपर्यसांत्वयन् ९ माघमासिमृतानांचस्वपुत्राणांमहात्मना कथंचित्कारयामासतेषामेवौर्ध्वदैहिकं १० प्रत्यहंचगृहंगच्छ
न्स्त्रातःपुत्रानथाहूयत् प्रलपन्नरनपन्नि[illegible]सांत्वंसचकारह १११ मरणायोद्यमंचक्रेविषपूर्वंचभुक्तवान् भुक्तंजीर्णविषंतस्यभो
क्तव्यत्वाद्धिकर्मणः १२ प्रविवेशानलं[illegible]मंदरसन्निभं शांतोभवत्तदावन्हिर्भोक्तव्यत्वाद्धिकर्मणः १३ मेरुशृंगंसमारुह्यपपा
तावस्तलेमुनिः ततोपिनमृतिंप्रापभोक्तव्यंनातिवर्तते १४ सिंहव्याघ्रादिवदनेप्रवेशमपिचेच्छति जगृहुर्नैनमाशासुमृगाःक्वापिकदा
चन १५ गिरिंवध्वोदरेपश्चात्त्ययोधौसपपातह तत्रापिनमृतिंप्रापभोक्तव्यत्वाद्धिकर्मणः १६ पश्चात्त्वङ्गमथादायशस्त्रेणभयोद्यतः

ब्रह्मैवात्राजगामाथ स्वपुत्रमनुसांत्वयन् १७ उवाचाश्रुकलापास्त्रं भ्रांतं भ्रांतं पुनःपुनः निबोधनानमहाकंपदं सांत्वनपूर्वकं १८ बालिशं त्यज दैवाद्यत्सदा नहशवर्तिने यत्प्राप्तं नत्सुखं दुःखं संगतो गुणकर्मणां १९ चक्षुष्मतानीयमानो चक्षुष्मानिव सर्वशः ईशदत्तं च भोक्तव्यमत्यूर्वैः किमुतापरैः १२० कर्मणा भ्राम्यमाणानां जनानामिह संसृतौ क्षणानुरूपवंधेन प्रपायामिव संगतिः २१ ईश्वरोपि मनः कृत्वा जनानां नतु दुह्यो वली नासाद्य नाग्निव ध्यावध्यानाग्निगुणाह्वये २२ पापपुण्यस्य भारं च वाहयत्यनिशं हरिः कस्य दैवं निराकर्तुं शक्यं तेवाकुतस्त्वनं २३ इत्यादि बहुभिर्वाक्यैः सनत्वैश्च पितामहः इत्थं च शमयामास वसिष्ठस्य महात्मनः २४ पुनः पप्रच्छ ब्रह्माणं वसिष्ठो ब्रह्मनंदनः संततिर्वा कथं भूयाद्भिष्टद्विरितः परं १२५ न मे कोप्यवशिष्टोभूत्पुत्रेषु महत्स्वपि कृत्वा च संततेर्हद्धिं शमदं त्वं च मामकं २६ इति पृष्टस्ततश्चाह ब्रह्मा ब्रह्मविदांवरः पुत्रान्स्वर्गगतान्ब्रह्मन्मा स्म त्वं न प्रभावतः २७ यं गत्वा न निवर्तंते तां गतिं प्रापुरोजसा पुनस्तज्जीवनेनैषां कुतः शक्तिर्भविष्यति २८ तस्माच्छक्तेश्च भार्येयं गर्भिणी लोकसुंदरी विश्वामित्राज्ञया भूयः पुनरेनां तु गर्भिणीं २९ हनिष्यति न संदेहस्तस्मादेनां महामते मनुनानेन तां रक्षस्व सुषां ते गर्भिणीं मुने १३० माधवस्तवराजेन उपदिष्टेन विष्णुना येन गुप्तां स्नुषां हंतुं शक्तो नैव सराक्षसः ३१ विश्वामित्रकृता माया निरर्थां तु भविष्यति माघमकरगे भानौ कुरु स्नानं यथाविधि ३२ जेन विष्णुर्भवेद्धिष्णुर्व्याससरूपी जनार्दनः इति तं बोधयित्वा तु ददौ मंत्रमनुत्तमं ३३ ब्रह्मा यथौ ततः पश्चात्स्मयमानः सुरोत्तमैः शोकं त्यक्त्वा वसिष्ठोपि स्तवराजेन गर्भिणीं र क्षयामास हृष्टात्मा कुर्वन्माघे जलाप्लुतिं तेन पुण्यप्रभावेन पौत्रोभूत्व पराशरः १३५ तस्माज्जज्ञे महाविष्णुर्व्यासरूपी रमापतिः ददौ मंत्रं च पौत्राय सोपि व्यासाय चावदत् ३६ इति क्रमाद्विख्यातः सर्वरक्षाकरो ह्ययं मंत्रागमप्रकारस्तु कथितस्तु मुनीश्वराः १३७ इति श्रीवायु

पुराणे माघमाहात्म्ये षड्विंशोध्यायः २६ गालव उवाच विश्वामित्रमहात्मानं ततो हत्याशनं मुनिं पीडयामास नियतं परिवार्याप्यहर्नि
शं १ ऊर्ध्वकेशा विरूपाक्षा ऊर्ध्वबाहुभयंकराः तिष्ठंतं च तपंतं च निःश्वसंतं भयाकुलं २ गच्छंतं प्रस्खलंतं च धावंतं च महामुनिं दु
द्रुवे भयतः शीघ्रं यमस्यांतिकमेव सः ३ तमुवाच ततो भीत स्त्राह्यस्मादिति सादरं ततो दंडधरः प्राह न मे शक्तिरिति स्फुटं ४ एवं निराकृ
त स्तेन धिषणांतिकमाययौ तमुवाच ततो भीत स्त्राह्यस्मादिति सादरं ५ ततो बृहस्पतिः प्राह न मे शक्तिरिति स्फुटं एवं निराकृतस्तेन व
रुणांतिकमाययौ ६ तमुवाच ततो भीत स्त्राह्यस्मादिति सादरं ततो पाशधरः प्राह न मे शक्तिरिति स्फुटं ७ एवं निराकृतस्तेन सूर्यसां
तिकमाययौ तमुवाच ततो भीत स्त्राह्यस्मादिति सादरं ८ हरिदश्वश्च तं प्राह न मे शक्तिरिति स्फुटं एवं निराकृतस्तेन सोमस्यांतिकमा
ययौ ९ तमुवाच ततो भीत स्त्राह्यस्मादिति सादरं ततो सोमश्च तं प्राह न मे शक्तिरिति स्फुटं १० एवं निराकृतस्तेन देवेंद्रस्यांतिकं ययौ
तमुवाच ततो भीत स्त्राह्यस्मादिति सादरं ११ ततो वज्रधरः प्राह न मे शक्तिरिति स्फुटं एवं निराकृतस्तेन रुद्रस्यांतिकमाययौ १२ तमु
वाच ततो भीत स्त्राह्यस्मादिति सादरं श्रुत्वा रुद्रः सह गणैस्तत्रैवांतरधीयत १३ ब्रह्महत्याशनं पृष्ठे धावंतमनुधावति ततस्तुष्टाव तं रु
द्रं भगवंतं महेश्वरं १४ संसाराख्या महा[illegible]यन्नाम्नः स्मृतिमात्रतः दुद्रुवे स्मात्ततो रुद्रस्तस्मै तुभ्यं नमो नमः १५ यन्नामस्मरणात्पापं दुद्रु
वे च द्रुतं ततः अतो रुद्रोसि भगवन्[illegible]तुभ्यं नमो नमः १६ क्षयापस्मार रोगादीन्यतो द्रावयते हरः अतो रुद्रं वदंति त्वां मुनयः शंसित
व्रताः १७ रुजं द्रावयते यस्मात्तस्माद्रुद्रं विदुर्बुधाः नमस्तस्मै भगवते निदानायाश्रयाय च १८ रुद्रं मार्गमिति प्राहुस्तन्मार्गं भाति वै स
ता अतो रुद्रमिति प्राहुः संतः सन्मार्गहेतवे १९ रुद्रेति त्वामतः प्राहुस्तस्मै धूर्जटये नमः रुद्धमावरणं विद्यो प्राहुर्ब्रह्मविदो जनाः २०

यस्तारः पावकोयस्मात्रुद्रतुभ्यंनमोनमः त्रैपुराणांचदैत्यानांयतोवाध्यविमोचनं २१ यतोरात्रिंनतोरुद्रोमृडस्तस्मैनमोनमः रुदिति
ज्ञानमुद्दिष्टंतद्दात्यस्मादसुतन्तः २२ वदंत्येनंरुद्रमितिनमस्तस्मैनमोनमः रुद्राः क्रियाः समुद्दिष्टास्तासांसाक्षीयतोहरः २३ अतो
वदंतित्वांरुद्रंनमस्तस्मैवृषध्वज रुद्र[illegible]स्तुष्टोरुद्रोमहाप्रभुः २४ माघ्यांजपेतिगायत्रींनमुवाचांतरिक्षगः ततः सदान
दीसंगंप्राप्यमाघ्यांमहामुनिः २५ स्ना[illegible]रुद्रंप्रतिष्ठाप्यसम्यक्संपूज्यभक्तितः गायत्रींचजजापासौपरब्रह्मर्षिदैवतां २६ वेदमा
तुर्जपान्माघ्यांस्नानाद्रुद्रस्यस्थापनात् ब्रह्महत्याशतेनापिततोमुक्तोमुनीश्वरः २७ ततः प्रभृतिगायत्र्याविश्वामित्रऋषिर्मतः गोवधा
द्युपपापानिक्षुद्रपापानियानिच २८ तानिसर्वाणिनश्यंतिगायत्र्येकजपाद्ध्रुवं गायत्रींयोजपेन्माघेसकृदंगुलिपर्वणि २९ प्रातः
स्नात्वाशुचिर्भूत्वाब्रह्महत्यांव्यपोहति गायत्रींजपतेयस्तुनित्यंमाघेजलाप्लुतः ३० नलिप्यतेपातकेनपद्मपत्रमिवांभसा स्नात्वामा
घेजपेन्वेदमातरंतुद्विजोत्तमः ३१ सर्वान्कामानवाप्नोतिसर्वयज्ञफलंलभेत् योवेदमातरंनित्यंमासेष्वन्येषुवैपठेत् ३२ लक्षेनैकेन
लभतेराजसूयाधिकंफलं माघेमासिजपन्सोस्तुतस्मात्कोटिगुणंलभेत् ३३ योवेदमातरंनित्यंमाघेस्नात्वाबहिर्जले कुष्टरोगाद्वि
निर्मुक्तः परांसिद्धिमवाप्नुयात् ३४ विश्वामित्रस्तपः सिद्धिंगायत्र्याश्चप्रभावतः प्राप्यसंतोषमापेदेस्तुवन्माघफलंपुनः ३५
मंत्रवर्गेतुनश्चापिवसिष्ठाधिक्यकांक्षया दुश्चरंतुतपस्तेपेजपन्वैवेदमातरं ३६ दिव्यषष्ठिसहस्रंवैवर्षाणांक्रोधविह्वलः
मुष्टिमात्रमयश्चूर्णमाहारार्थंप्रकल्प्यते ३७ तपस्तेजः समुद्भूतोवन्हिरूर्ध्वंददाहसः त्रीन्लोकानभितोह्येनादिशः प्रज्वालय
न्महान् ३८ इंद्रस्तुभयमापेदेतपसोस्यमहात्मनः किमुद्दिश्यतपत्येषः प्राप्यमत्यदमिच्छति ३९ ततोविघ्नस्ततोकार्यइतिदेवैः

सुमंत्रितैः कामंचप्रेषयामासतत्तपोविघ्नसिद्धये ४० तस्याश्रमंययौधीमान्माधवेनसुसंगतः पुष्पभारसमाक्रांतास्तरूंश्चकामप्र
णोदितः ४१ अकरोन्माधवःसद्योमोहकृन्महतामपि दृष्ट्वाकालंवसंतंतुंकिमेतदितिचिंतितः ४२ इंद्रकृत्यमितिज्ञात्वाकामंचागत
मित्यपि व्याघ्ररूपंसमास्थायतंकामंसाप्सरोगणं ४३ जिघृक्षयानुद्रुतवांस्तंदृष्ट्वादुद्रुवेस्मरः कोपात्तानोगाधिपुत्रोजग्मेमामागतंमुनिं
४४ ततश्चाधिकमित्येनंदेवेंद्रायन्यवेदयत्त पुनःसभाप्रविष्टोसोचिंताव्याकुलमानसः ४५ प्राहकेनतपोविघ्नोभवेदस्यमहात्मनः
दुःखेनैवोदितेशक्रेप्राहदेवेंद्रमूर्वशी ४६ शृणुशक्रप्रवक्ष्यामित्यजदुःखंसुखंश्रय जयाम्यहंमुनिंतंतुकापरस्त्वेनेवयोषितां ४७ मद्वाक्यं
कुरुशक्रत्वंत्यजसंदेहमंजसा महांतोपिहिमुह्यंतिमाययायोषितांध्रुवं ४८ पुरूरवामुनींद्रश्चमैत्रावरुणसंज्ञकः रुक्मांगदःशंतनु
श्चमनुजाःकिमुतापरे ४९ चंद्रसूर्यौसमाहूयराजानौभवतांत्विति आज्ञापयमहाबाहोद्वौयुद्धंकुरुतंस्त्विति ५० कुर्यातांतौप्रजापी
डांपरस्परजयेच्छया विद्रवंतिजनाःसर्वेराजविग्रहतोजनाः ५१ साध्वीरूपंसमास्थायसहतेश्चपलायिताः तदाश्रमंचसायान्हेयास्ये
चातीवसुंदरी ५२ तदेवपतिपुत्रादेःसामहंविरहातुरा तदाचातिथिकालेतुसायान्हेगृहमागते ५३ शोचंतीपतिपुत्रादीन्यायांतस्या
तिकंशनैः तदाचातिथ्यकालत्वाद्दीनांमांचशुचातुरां ५४ कृपयाविष्टचित्तःसन्नातिथ्यंमेकरिष्यति तदाचतंप्रवक्ष्यामिचुनमार्गांब
लानिशि ५५ कथयास्माममध्वमार्गंप्रापयास्माभिमार्गतो पितृभ्रातृसुतादींश्चचरंतींप्रतिपद्यतिं ५६ आर्तानामंगहीनानामंगलानांच
सागतिः सद्राजाचमहांतोपिनृतिशास्त्रविनिर्णयः ५७ तस्मान्मामद्यसंरक्षतमेवंविप्रलंभये सत्त्याकामामुनींद्रेतुसुशेवाणप्रसारणं
५८ करोतुतेनविद्धःसन्सद्योमामेतिनिश्चयं आज्ञापयततःशीघ्रंकृत्वाकार्यंपुनर्व्रजे ५९ सारमेयस्वरूपेणाविग्रहंमसहिमुना संदेवेनो

नमुनिनापुनर्योमितवांनिकं ६० त्वमप्याशदाश्रमस्यराजाभूत्वाभुवंब्रज सभायांनेतुपश्यंतुवसिष्ठाद्यामुनिंचतं ६१ इतिश्रुत्वावचस्तस्याः
शक्रः कौतूहलाकुलः आहूयविश्वकर्माणंपुरीनिर्माणहेतवे ६२ ममचेंद्रोः पतंगस्यपुरस्तिस्त्रोगुणाकराः कुरुशीघ्रंभुवंगत्वातमित्याज्ञा
पयद्विभुं ६३ सोपिभूमिंसमासाद्य [illegible] विनिर्ममे तद्योरुभयोर्नद्याः कृष्णावेण्यामहाबलाः ६४ सोमशीलांसूर्यशीलांतथाराजशी
लामपि सोमसूर्यौनृपौभूत्वास्वनाम्[illegible]रीगतौ ६५ विवादंचक्रतुस्तत्रक्रुद्धाविवपरस्परं शक्रोराजशिलांप्राप्यसुखमासीन्निराकुलः
६६ मायायुद्धमभूत्तत्रतदावैचंद्रसूर्ययोः तदातेजिगमिषयानत्रदेशांतरंजनाः ६७ इदुर्विरेयथाकामंराजविद्रुरतोजनाः काचित्पतिंसुतं
काचित्काचिद्बंधूंन्विहायच ६८ उर्वशीतुतदागत्यसाध्वीरूपमुपेयुषी मार्गभ्रष्टेवसाखिन्नारुदंतीवशनैर्भयात् ६९ स्मरंतीपतिपुत्रादीन्प
श्यंतीचदिशोदश क्वचित्स्वानाहुयांचक्रेसद्योलोकवशंकरी ७० शनैस्तदाश्रमंप्राप्यसायान्हेनसमागतं रुदंतीसाऽबलाखिन्नागृणंतीना
मतःस्वकान् ७१ तान्दृष्ट्वाकृपयाविष्टोविश्वामित्रोमुनीश्वरः पप्रच्छकुशलंकासिकस्यपुत्रीपतिश्चकः ७२ कस्माद्रोदिषिबालेत्वंकु
तश्चैतःसमागता इतितस्यवचःश्रुत्वासानारीवाक्यमब्रवीत् ७३ नारायणाख्यकन्याहंनाम्नाकांतालकेतिच सायजूकस्यपत्नीच
विद्धिनिस्पृहमांमुने ७४ अदृष्ट्वापतिपुत्रादीन्रुदंतीकरुणस्वरा राजविद्रुरतोभीताजनाःसर्वेपलायिताः ७५ अकस्माद्दुद्रुवेचाहं
विहायास्मज्जनानिह निगृह्यदुर्जनाबालामटंतींरक्षकंविना ७६ भोक्ष्यंतीत्येवनिःश्वस्यशंकयाहंतवांतिकं सायान्हेचागता
धीरज्ञात्वात्वांचतपोनिधिं ७७ साध्वीनारक्षितारोहियांतिब्रह्मसदोर्चिताः मुनेविश्वासितुयोग्यस्त्वसाधूनांनसंशयः ७८ स्वःश्रु
त्वांबांधवाःसर्वैविश्वसंतिनसंशयः तस्मान्मामद्यरक्षांत्वंकुरुचातिथ्यमेवच ७९ इतितस्यावचःश्रुत्वाविप्रलब्धोमुनीश्वरःओ

मित्युक्त्वाकरोत्तस्मैआतिथ्यंचफलादिभिः ८० गुहायांतांविनिक्षिप्यस्वयंद्वारिस्थितोमुनिः द्वारांनिद्रांचकारासौतन्मध्येकामउल्बणः
८१ शनैर्विव्याधतंविप्रंतेनासौज्वलितोभवत् निरुन्धन्मनसात्मानंबहुधापिमुनीश्वरः ८२ आहृत्यचमुनिस्तस्यमनस्तस्माद्दुराग्रहात्
शतवारंमुनीन्द्रोसौप्रत्यगच्छद्धृतव्रतः ८३ तथापिनशशाकासौमनोनिग्रहेणामुनिः शान्तोदरीमालिलिंगेकामांधोनिशिनिद्रितां ८४
साबुध्वाप्रलपद्विप्रंसाध्वीवान्यवशंगता किंकरोषिवरासित्वंत्वांविश्वस्तासमाश्रिता ८५ अविचारगतायामेगतिःकावाभविष्यति ध
र्मसेतुश्चभग्नोसौमुनिनानेननिश्चितं ८६ विलपन्तीवचनत्याम्मुनेर्नास्यवशंगता पापिष्ठांमांविहायान्यांपतिर्मेपरिणेष्यति ८७ लोक
भीत्यास्वभावाद्वामनोनिर्हृत्यत्वंमुने कृत्वात्वंदूषितांलोकेमांविहायगमिष्यसि ८८ अहमेकान्तदानष्टात्पजमांमूढधीस्ततः
इतिनिर्भर्त्स्यतंबल्तुनिर्ययौचगुहामुखात् ८९ पुनर्निगृह्यतांबालांबलात्कारान्मुनीश्वरः प्राणत्यागमतिंचक्रेगलेबध्वाकुमारि
का ९० तदातांसान्त्वयामासबहुधैवप्रतिश्रुतैः विश्वस्ताचप्रतिश्रुत्यमुनिंवाक्यमथाब्रवीत् ९१ नत्याज्याहंत्वयाक्वापिननिषेधो
ममापिच स्वेच्छयागमनेविप्रधर्मसाक्षीतिल्त्ववर ९२ ओमित्युक्त्वातयारेमेषष्टिवर्षसहस्रकं नित्यकर्मादिकंसर्वंत्यक्त्वान्कामुको
मुनिः ९३ तेनदोषेणतस्यापिकुष्ठोभूत्[illegible]दैहिकः गन्तुंविहायतंनारीशनैःसाचोपचक्रमे ९४ विश्वामित्रंतदाप्राहमुनेदूरंस्तिबां
धवः मातुलेपश्यतंद्रष्टुंईहामेजा[illegible] ९५ ततोगच्छामितिष्ठत्वंपुनर्यामिनसंशयः इतितस्यावचःश्रुत्वाविरहाकुलमानसः
९६ त्वयैवसहयायामित्वांविनानोत्सहेसरा इतितद्वचनंश्रुत्वासाब्रवीन्मुनिपुंगवं ९७ जारस्तुत्वांनुविज्ञायमातुलेयोहनिष्यति मां
चनत्रनसंदेहस्ततःकान्तत्वयासह ९८ गन्तुंवनोत्सहेतिष्ठशीघ्रंयामिपुनर्मुने पुन स्तस्यावचःश्रुत्वामुनिर्वाक्यमुवाचह ९९ प्राप्या

हं सारमेयत्वं त्वयासाकं ब्रजाम्यहं त्वत्तोवियतं च जानंतिनावयोर्विरहो भवेत् १०० उरीकृत्य वचस्तत्त्वं सारमेयस्वरूपिणा सार्द्धं तेन मुनीं



द्रेण ययौराजशिलापुरीं १ देवेंद्रस्य सभामध्ये स्थितेयं कामरूपिणी विश्वामित्र वसिष्ठस्तु किमेतदिति चाब्रवीत् २ आत्मानं चात्मा

नानिंद्रक्रीडयावनंता भवत् विश्वा[illegible]निरीक्ष्यार्थं देवेंद्रो वाक्यमब्रवीत् ३ तथ्यं वदामि नानथ्यं हितं मत्वा सुखं ब्रज महदतिक्रमो

पुंसां ह्यनर्थाय भवेद्ध्रुवं ४ वसिष्ठ द्रोह[illegible]भूताविपदश्च तवागताः तस्मात्त्वं तु प्रसाद्यैनं सुखं तिष्ठ मुनीश्वर ५ इतीरितं हरेः श्रुत्वा पश्चा

त्तापमुपेयिवान् वसिष्ठं प्रार्थयामास क्षमस्वेति पुनर्वदन् ६ निर्विण्णं तु ततो दृष्ट्वा वसिष्ठोपि दयान्वितः ददौ स्वसाम्यमतुलं विश्वामित्रा

यधीमते ७ उपदिश्य तथा कुष्ठनिकृत्त्यर्थं मुनीश्वरः माघस्नानं हरेः पूजां गायत्रीजपमेव च ८ वसिष्ठो हरिणा सार्द्धं तत्रैवांतरधीयत

सापि नारी ययौ स्वर्गं मुनिः स्नानपरोऽवभौ ९ माघस्नानं तथा कृत्वा कृत्वा विष्णोश्च पूजनं जपं कृत्वा च गायत्र्या मुक्तः कुष्ठात्ततोभवत् ११०

तस्मान्न माघसदृशः परो धर्मोस्ति कश्चन तस्मात्सेव्यः सदा पुंसा पुमर्थानां च सिद्धये १११ इति श्रीवायुपुराणे माघमाहात्म्ये सप्तविंशोध्या

यः २७ गालव उवाच प्रातर्माघे नदीस्नानं तथा माधवपूजनं गीतापाठश्च सततं नाल्पस्य तपसः फलं १ यो दद्यान्माघमासे तु माधवं

प्रतिमां द्विजः स सर्वं कुलमुद्धृत्य विष्णोर्लोके महीयते २ यो माघे गुरुमुद्दिश्य स्नानमेकं करिष्यति अज्ञानतिमिरं भित्वा भित्वा स्वर्यस्यमं

डलं ३ सायुज्यं समवाप्नोति विष्णुना प्रभविष्णुना यो माघ्यां कुरुते स्नानं पितॄनुद्दिश्य मानवः ४ गयाश्राद्धशतं तेन कृतमेव न संशयः



यो माघ्यां भोजयेद्विप्रं शतं तेन निष्कल्मषं शु

यो माघ्यां वृषभं नीलं पितॄनुद्दिश्य चोत्सृजेत् ५ पितरश्चा द्धना स्तेन गयाश्राद्धशतं कृतं

चिं ६ तेन वश्यं करोत्यद्धा भगवान्विष्णुरव्ययः यो दद्याद्दीपमालां तु प्रयतो विष्णुमंदिरे ७ प्रकाशयन्दिशः सर्वा द्युतीयद्वभास्करः

विष्णोः सायुज्यमाप्नोति नात्र कार्या विचारणा ८ दीपदः कार्तिके मासि माघे मासि च वस्त्रदः वैशाखे चान्नदश्चापि नाप्नु-
वंति पुनर्जनिं ९ यो दानं माघमासस्य पूर्णायां कुरुते नरः तस्य पुण्यफलस्यास्य संख्या नैवोपजायते १० यो दद्यात्कपिलां
माघे पौर्णमास्यां विष्णुतत्परः साकं पितृगणैः सार्द्धं विष्णोः सायुज्यमाप्नुयात् ११ गोक्षीरेण च यः कुर्यात्स्नानं विष्णोर्महीयते॥
प्रीणाति पितरस्तस्य नात्र कार्या विचारणा १२ सहस्रनामपठनस्तन्माघे जलाप्लुतः संपूज्य माधवं देवं विष्णोः सायुज्यमाप्नुयात्
१३ यो माघे स्वगृहे स्नायान्मानवस्तु दृढव्रतः स जीवन्नेव चांडालः सर्वकर्मसु गर्हितः १४ या नारी कुरुते शूर्पयुग्मस्याद्याप-
नं बुधः माघशुक्लतृतीयायां गौरीमुद्दिश्य सादरं १५ न तस्याः कंठसूत्रस्य बाधा क्वचन जायते स्वर्चितं माधवं दृष्ट्वा माघस्नायी
द्विजोत्तमः १६ तावन्मात्रेण मुक्तः सन्विष्णोर्लोके महीयते यो दद्याच्चंदनं विष्णोर्धूपं चापि महात्मनः १७ तस्य स्थानं सकलां-
न्कामान्दाता विष्णुर्न संशयः अव्रतेन नयेद्यस्तु मासमेकं नराधमः १८ स रौरवं समासाद्य तिष्ठत्याभूतसंप्लवं कन्यादानशतं
यस्तु दत्वा फलमवाप्नुयात् १९ तत्फलं समवाप्नोति माघ्यां कांस्यप्रदानतः घृतपूर्णं कांस्यपात्रं यो दद्याद्धूर्निसंयुतं २० नैवेध-
व्यमवाप्नोति मांगल्यं चाधिगच्छति पंचगव्यैर्महाविष्णुं यः स्नापयति केशवं २१ राजसूयसहस्रस्य फलं प्राप्नोत्यसंशयं कांस्यं दद्या-
त्पौर्णमास्यां विष्णवे परमात्मने २२ क्षीरान्नं शर्करायुक्तं सघृतं विष्णवेऽर्पयेत् सार्वभौमो भवेद्राजा सप्तस्वपि च जन्मसु २३ यः क्षौमान्त
पौर्णमास्यां विष्णवे परमात्मने सोऽश्वमेधसहस्राणां फलमाप्नोत्यसंशयं २४ योऽश्वं दद्यात्पौर्णमास्यां माघे मासि द्विजातये गुरुहत्या-
कृतात्पापान्मुच्यते नात्र संशयः २५ पुरा तु चंद्रमा राजा सप्तद्वीपवतीं महीं प्रशशास महावीर्यः करदीकृतभूमिपः २६ पुरोहितं

स्तुतस्यासीद्धिषणोभगवान्मुनिः सकदाचिन्नवम्यांतु मासि चाश्विनसंज्ञके २७ उत्सवंकारयामास महालक्ष्मीमहाव्रते राज्ञा
तैनेंदनापुण्यं सर्वसंपद्विवर्धनं २८ नारीभिर्निर्ययौसाकं भार्यानस्पृष्टहस्तनेः गजाश्वादिविभूतीनामाधिक्यं कर्तुमुद्यता २९ ना
रीमध्येतुसानाराब्राह्मणीनायकाधमे तांदृष्ट्वामोहितोराजापुनरंतःपुरंगतः ३० निरुध्यत्वभुजेब्रह्मजायांकामवशंगतः यथा
चेधिषणोभूपंभार्यांदेहीतिचासकृत् ३१ अमासंबोधयामासनोचितंतेमहात्मनः ब्रह्मजायामहाघोराजनानांमातृसंमिता ३२ आ
युष्यंचनथावित्तंमानंसौभाग्यमेवच संततिसंपदश्चापिसर्वंहंतिकृतागमा ३३ चतुरंगबलैर्युक्तमपित्वांचमदोद्धतं शक्तिर्मेभूयसी
भूयोनात्रकार्याविचारणा ३४ नानामंत्रप्रवीणोहंसर्वशस्त्रास्त्रकोविदः नमयासदृशःकोपिधनुर्विद्याविशारदः ३५ मावमृष्याद्
रात्मात्वमात्मशंसापरोधम विज्ञातापिनवक्तव्यमविज्ञातेदुरात्मने ३६ इतिसंबोधितोराजन्नोचितंतात्यजस्त्रियं ब्राह्मणार्थेगवा
र्थेचमहाविपदिभूमिप ३७ योद्धव्यंब्राह्मणेनापिसमर्थेननसंशयः विपद्देशापिमहतीभार्याहानिस्वरूपिणी ३८ ममसंधिस्थि
तः पूर्वंभार्याभुक्तात्वयाबलात् इतःपरंक्षत्रधर्मेणोपाशुद्धाभविष्यति ३९ ब्राह्मणस्यापिविच्छेदेष्वधिकंवाभविष्यति वेदाध्यय
नसंपन्नेकुलीनेवामहात्मनि ४० विनाविपत्तिसंजातेब्राह्मणोक्षत्रधर्मिणी गतब्रह्मकुलोभूत्वानरकानेवगच्छति ४१ पूर्णकाम
स्यविप्रस्यकुलीनस्यमहात्मनः विख्यातस्यापिविद्यासुहलांनब्रह्मवर्चसं ४२ आपद्धर्माऋषिप्रोक्ताःसंतिशास्त्रेष्वनेकधा व्र
त्तिहीनस्यविप्रस्यवृत्त्यर्थंचोदिताइमे ४३ नोपास्याःक्षत्रधर्माहिप्राप्तिपरैर्द्विजोत्तमैः प्राप्तायदाद्विजेनैवक्षत्रवृत्तिःकथंचन ४४
हिंसारूपाक्षत्रवृत्तिर्ज्ञानिनाचद्विजन्मना नोपास्यासासदाक्वापीत्येवप्राहजनार्दनः ४५ योग्निनोपचरेद्विद्वान्द्विजन्मातुगृहाश्रमी

वर्षाद्दूर्ध्वं स चाण्डालो ब्राह्मण्याद्धि विहीयते ४६ तिलयंत्रे चेक्षुयंत्रे त्रिवर्षं पः करोति च ब्रह्महा स तु विज्ञेयो ब्राह्मण्याद्धि विहीयते ४७
अज्ञानाद्ब्राह्मणो विद्वान् चोरितान्भक्षयेत्तिलान् द्विजाधमः स पापीयान्ब्राह्मण्याद्धि विहीयते ४८ ब्राह्मण्यं सर्वदा रक्ष्यं सर्वयोनि
षु दुर्लभं अधिकाशीतिभेदासु क्रमाज्जातासु योनिषु ४९ बहुपुण्यवशाज्जीवो ब्राह्मण्यां योनिमाव्रजेत् किंचिद्दृष्ट्वापि राजर्षे तेषां
तु विविधापनः ५० शूद्रकोटिवधान्तामस्त्रीवधस्य विदो विदुः कोटिस्त्रीवधतुल्यं तु गोवधं तु मनीषिणः ५१ कोटिगोवधतुल्यं
तु ब्राह्मणस्य वधं विदुः पट्टाभिषिक्तभूपस्य ब्रह्मकोटिवधाधिकः ५२ दुष्टानां शिक्षणं चैकं शिष्टानां प्रतिपालनं उभौ क्षत्रियधर्मौ
तु न विप्रस्य कदाचन ५३ ब्राह्मणाः कुपिता हन्युर्लोकाल्लोके शसयुतान् किमु तत्र विशिष्टास्ते ब्राह्मणा ब्रह्मवादिनः ५४ कार्यात्रं चे
व मे दंडो विहितस्त्वयि यत्नतः त्यजेत्तं ब्राह्मणं घोरं गुरुपत्नीकुलाधम ५५ ब्राह्मणो ब्रह्मनिष्ठानो गुरुस्तस्माद्विनिर्ययौ सप्तर्षीन्प्र
तिपद्याथ राज्ञो दोषं न्यवेदयत् ५६ शृणुध्वमृषयः सर्वे मह्यमथामिंद्रु प्रापिता हृष्टमानस कल्याल्लोकान्भगवान्विष्णुरव्ययः ५७ साम्रा
ज्ये स्थापयामास ब्रह्माणं च चतुर्मुखं युवराजं महाबाहुं बलरूपसमीरणं ५८ गोप्तारं तस्य रुद्रस्य महारुद्रं बलोत्कटं अमात्यत्वेन
थैवेंद्रं दिग्विराज्यागकर्मणि ५९ प्रजेशान्नवसंख्याकान्यत्रलेख्यादिकर्मणि मांदिदेशाधिकारित्वे ऋषीन्धर्मविनिर्णये ६० त
थाधिकृतौ मानुष्ये चंद्रसूर्यौ महाबलौ कारागृहाधिकारे तु यमं लोकस्य कंटकं ६१ दुराचारः सदाचारः सदा वेदोक्तकर्मणि नव
ग्रहान्सदा क्रूरान्गूढाचारान्स्वसत्तथा ६२ एकोनपंचसंख्याकान्मरुतः कश्यपात्मजान् सोविदलानन्महाविष्णुर्गंधर्वाप्सरसस्तथा
६३ गीतनृत्यादिकृत्येषु किन्नरान्स्तुतिपाठकान् विद्याधरांश्च दिनो गिंदीपधारणकर्मणि ६४ ग्रामग्रामाधिपान्भूपान्नललोकपती

नथ निषादान्राक्षसांश्चक्रे भगवान्विष्णुरव्ययः ६५ देवांश्चपरिवारत्वेएनान्जंतूश्चपोषकान् सार्वभौमः स्वयंविष्णुः सर्वलोकैकना
यकः ६६ धर्मसंस्थापनायैवंजगदेतद्धिनिर्ममे आशुयूयंबोधयध्वंयूयंधर्माधिकारिणः ६७ सप्तर्षिणोमहात्मानोगुरुणाप्रा
र्थितास्त्विमे बोधयामासुरभ्येत्यसोमंराजानमंजसा ६८ शृणुभूपहितंवाक्यंवर्णानांब्राह्मणोगुरुः अयंपुमेहितोविद्वान्गुरुश्चभ्यधि
कोगुरुः ६९ तत्पत्नीतवमातेयंमानिनीलोकसुंदरी हेतोरल्पस्यभोभूपबहुहानिंत्वमिच्छसि ७० अनेनकर्मणाभूयाद्बहुदुःखं
नसंशयः इतितैर्बोधितोराजाननत्याजगुरोःसतीं ७१ गोष्पतिंततःखिन्नाःप्रोचुःसप्तर्षयोपिते नास्माभिर्बोधितुंशक्योराजायं
चदुराग्रही ७२ वयंधर्मस्यवक्तारोनवयंशिक्षकाभुवि मनूनिंद्रान्निवेद्यैवतत्कार्यंक्रमानद ७३ तेभ्यःखिन्नोगुरुःपश्चाद्देवेंद्र
सदनंययौ सोमराजस्यदौरात्म्यंदेवेंद्रायन्यवेदयत् ७४ सदस्येभ्यश्चदेवेभ्यःप्रजेशेभ्योनिवेद्यच मनुभ्यश्चवसुभ्यश्चरुद्रेभ्यश्चम
हामतिः ७५ देवाचार्यंततःप्रोचुर्देवाइंद्रपुरोगमाः नास्माभिर्हन्यतेराजाशशांकोयंवलोत्कटः ७६ महेशवरदर्पेणजयिष्णुर्देव
ताअपि समुद्रमथनेपीत्वाविषंलोकस्यकंटकं ७७ विषज्वालोपशांत्यर्थंदधौचंद्रकलांहरः तदावरंददौतस्मैयदाराजाभविष्य
सि ७८ तदासर्वैश्चभूपालैर्देवैश्चमनुजैस्तथा राक्षसैस्त्वरगैर्दैत्यैरवध्योभवसंगरे ७९ तस्माद्देवगणैस्सर्वैर्नदंड्योमृगलांछनः
किंचास्माभिर्दत्तवरस्तथादत्तवरायुधः ८० अभिषिक्तश्चसाम्राज्येततोहंतुमसांप्रतं विषात्मकोपिनच्छेद्योहृस्वः स्वेनकदाचनः
८१ तस्मान्नदंड्योभूपोयंयथारुचिस्तथाकुरु निराकृतस्तुदेवैस्तैर्गुरुर्दुःखाकुलोभवत् ८२ ततोदेवानुवाचेदंकोपाटोपेनगोष्पतिः
विष्णुनाधिकृतायूयंलोकधर्मस्यगुप्तये ८३ नविचारोहिभवतांप्राप्तेधर्मस्यविप्लवे स्वाधिकारप्रयुक्तायेविष्णुनाप्रभविष्णुना ८४ तैः

प्राणाअपिसंत्याज्याःसंप्राप्तेधर्मविप्लवे तिष्ठंतियोगिनोयूयंतत्रहंतेवापुरोहितः ८५ राज्ञोराष्ट्रकृतंपापंराज्ञःपापंपुरोधसः पत्युर्भार्या
कृतंपापंशिष्यपापंगुरोरपि ८६ मच्छिष्यत्वाच्चभवतांगुरुत्वाच्चैवदेवताः भवद्भिश्चकृतंपापंमामेवसमुपेष्यति ८७ यथापराधदंडो
हितस्माद्दुःक्रियतेनमया ब्राह्मणत्वान्नशक्याभूद्हिंसामेभवतामपि ८८ युष्मद्विचारदैन्येनयस्माज्ज्ञायापमानिता आःपापनिचिता
यामिसदनंभवतामपि ८९ भवद्द्वारापमानार्थंवहुरूपीभवाम्यहं नेदेहेयुष्मदंगानिप्रविशामिनसंशयः ९० सहैवानुप्रविष्टोहंयुष्म
द्देहान्सदेहगः इत्युक्त्वाविररामाथदेवेंद्रस्तुवृहस्पतिः ९१ कियत्कालंनिरीक्ष्यैवंनोचितंचिंतितान्वदन् सभूत्वावहुरूपोपिदेवांगा
निविवेशह ९२ पश्यतामेवसर्वेषांजंभारेश्चैवसंसदि दृष्ट्वातत्रार्थयाचक्रुर्निर्विण्णानंतदासुराः ९३ वयंब्रह्माणमभ्येत्यकरिष्यामोघ
निष्कृति तदुक्त्वावर्तमानाश्चयद्भार्यायाविमोक्षणं ९४ तावत्समस्तधिषणामाविषादंहृष्ट्वाकथाः कारणंसुखदुःखानांभगवान्ही
शिश्वरः ९५ पूर्वकर्मानुरोधेनभवितव्यंददातिसः समंपश्यंतिवैधीरामानामानौजयाजयौ ९६ लाभालाभौसुखंदुःखंभयंचाभय
मेवच पूर्वकर्मानुरोधेनदातातुविष्णुर्निवर्तकः ९७ तस्मादावश्यकेकार्येनोविषादोमहात्मनां निर्दिष्टंविपदश्चापिनवितानेनसंशयः
९८ नोपेक्षाकृतेब्रह्मालोकानांचपितामहः शुश्रूविष्वस्यतेदेवाब्रह्मणःसदनंययुः ९९ देवाब्रह्मसदोगत्वातंसेसर्वंन्यवेदयन्
श्रुत्वाब्रह्मापितान्प्राहदेवानिंद्रपुरोगमान् १०० ब्रह्मोवाच प्राप्तेशत्रुविवादेतुशत्रुणाशत्रुमुद्धरेत् विवादेमित्रयोःप्राप्तेसांत्वैनैववशा
मनयेत् १ देववंधुःसदासोमोगुरुश्चापिमहामतिः तस्माद्भार्याविमोक्षार्थंदेवाचार्यस्यधीमतः २ युष्माभिःसहगंतव्यंमयासोमस
केतनं इत्युक्त्वाप्रययौब्रह्मादेवैःसोमनिकेतनं ३ ब्रह्माणंत्वागतंवीक्ष्यदेवान्मुनिगणैर्युतान् व्रीडयावनतोभूत्वात्रस्तःसोमोविनिर्ययौ १०४

पूजयामास विधिवद्देवान्ब्रह्मादिकांस्तथा। किंचनोवाच तं पश्यासोमो राजा भयाकुलः ५ देवान्वीक्ष्य ततो ब्रह्मा सोमं रुद्राग्रे...
त्यजैनां त्वं गुरोः पत्नीं मातुरप्यधिकां तव १०६ राज्ञां च धर्मशीलानामिदं कर्म न चोचितं किंच विष्णुश्च धर्मात्मा धर्मविप्रकरं नृप...
हनिष्यति न संदेहो यतो धर्मवपुर्हरिः यदा यदा हि धर्मस्य ग्लानिर्भवति शाश्वती ८ तदा तदावतारोस्य दयालोः परमात्मनः त्यज शीघ्रं
ब्रह्मजायां मया वै धुनयोदितं १०९ निशम्य तद्वचो राजा तत्याजातीवविह्वलः पश्चात्तापाद्ब्रह्मजायां रुदन्स्मृत्वा स्वकर्म च ११० ततो दे
वाः समाहूय देवाचार्यं महामतिं जायां निवेदयामासुस्तस्मै चिंताकुलात्मने १११ सा सूतं तनयं तावद्बुधं चंद्रस्य वेश्मनि अतीतान्
न्यपि वर्षाणि षष्टिपंच च वार्षिकः १२ ययाचे क्षेत्रजं बालं गुरुश्चंद्रं महामतिः मद्वीर्यजः कुमारोयं न तदास्यामि चंद्रमाः १३ इति प्राह
कुमारार्थं विवादः पुनरप्यभूत् ततो ब्रह्मा ऋषीनूचे कस्यायं वदते ति तत् १४ क्षेत्रिणाभ्यर्थितो यस्तु तदीये वीप्रजार्थिभिः परक्षेत्रे बी
जिनोपि फलं वाप्नोति निश्चितं ११५ बलात्कारात्परक्षेत्रे बीजी तु फलमश्नुते न दोषः प्रथमे पक्षे न्यायादेव फलं स्यात्तु १६ पक्षे द्वितीयके
नारीकुलं पातयते ध्रुवं मुनिभ्यस्तु तदा ब्रह्मा श्रुत्वा धर्मविनिर्णयं १७ न्यवेदयत्तदा ब्रह्मा गुरुचंद्रमसोस्तदा मद्वीर्यमिति चाचख्ये गुरु
र्देवे च संसदि १८ मद्वीर्यमिति चाचख्ये चंद्रमाश्च ततः परं ततः संशयमापन्ना देवा एवं न्यमंत्रयत् १९ मातैव तद्विजानाति पुत्रजन्म
न चापरे तस्माद्देवैव प्रष्टव्यादिति निश्चित्य ते सुराः १२० बुधमानीय तं प्रोचुर्जननीं पृच्छ बालक त्वयि कस्माज्जनिरभूदिति पृष्टा निवेद
य २१ इति देवैरथाज्ञप्तो बुधोपपृच्छ मातरं त्वयि कस्माज्जनिरभून्मातस्तथ्यं न चान्यथा २२ नानृतात्परमं पापं देवानां चैव संसदि इ
ति पृष्टात्मजेनाथ चंद्राज्जन्मेति चाब्रवीत् २३ तच्छ्रुत्वाथ बुधः प्राह देवान्ब्रह्मपुरोगमान् माता चाह जनिर्देवाश्चंद्रादिति च स्वैरिणी १२४

तच्छ्रुत्वादेवताऊचुर्गुरुंपुत्राभिकांक्षिणं चंद्रंतुवीजदंप्राहवेलान्कारायतोविधेः १२५ नप्रार्थितस्त्वयापूर्वंअतश्चंद्रोहिनिध्रुवं गुरुरेव
वचःश्रुत्वापुत्रंचंद्रमसेर्पयत् २६ सभार्यकोगुरुस्तस्थौसभामध्येनुवीक्षितः प्रादाद्राज्यंबुधायासौप्रजाआहूयचंद्रमाः २७ राज्यंनिवेदि
तंह्यस्मैसनुवःपालइष्यति इत्युक्तेतुशशांकेनप्रजाऊचुश्चसंसदि २८ शृणुचंद्रप्रवक्ष्यामःकुंडजत्वात्तवात्मजः राज्यंनार्हतिकुंडस्य
तस्यधर्मेमतिःकुतः २९ अनूचानःकुलीनस्तुराज्यमर्हतिनापरः नाम्नाचक्रुर्विशःसर्वाबुधंचंद्रतनूद्भवं १३० गुरुःप्राहनिजांभार्यां
दुष्टांत्वांतुनपालये नहनिष्यामित्वांपापांयावदामरणांतिकं ३१ कुंडमध्येविनिक्षिप्य किंचित्तेजोवनेददे गुरोर्वैसातदावाक्यंश्रुत्वा
माताकुमारकः ३२ संसदंतुसमासाद्यप्रोचतुर्देवतामुनीन् जायांजहौगुरुःपापांनांगीकुर्वंतिमांजनाः ३३ निष्कृतिश्चास्तिसौम्येनकुरु
ध्वंचावयोस्ततः नास्तिचेदुपदेशोहिदेहनाशोदुरात्मनोः ३४ नदेवान्यतरंपक्षमस्तिनास्तीतिनिश्चयं आवामुभौकरिष्यावोनात्र
कार्याविचारणा १३५ इत्युक्तेचतदाताभ्यांमुनीन्ब्रह्मावलोकयत ब्रह्मणोहृदयंज्ञात्वास्वमतंतेन्यवेदयन् १३६ पत्योजीवतियाः
नारीमृतेवाव्यभिचारिणी चांडालीसातुविज्ञेयासर्वकर्मसुगर्हिता १३७ दाक्षिण्यादथलोभाद्वासंसर्गंयेप्रकुर्वते तेसर्वेनरकंयांति
यावदाभूतसंप्लवं १३८ तौसुतौकर्मचांडालौप्रोक्तौतौकुंडगोलकौ इत्युक्तेमुनिभिःसर्वैस्तदाधर्मस्यनिर्णये ३९ तदानिर्वेदमाप
न्नादेवाब्रह्माणमूचिरे अस्माकंतुब्रह्माज्ञानःप्रयासःकमलासन १४० स्वात्मनेविष्णुनाप्रोक्तंप्रायश्चित्तंप्रचोदय युक्तानांचैवनारी
णांमहापातककोटिभिः ४१ लक्षवर्तिव्रतंचैवमाघस्नानंतुनिष्कृतिः कुंडानांगोलकानांचमहापापकृतामपि ४२ माघेस्नात्वातुयोद
द्यादम्बलक्षणसयुत गुरुतल्पाद्धिमुक्तिःस्यादेवमाहजनार्दनः १४३ तस्मादेतत्त्रिभिःकार्यमेतत्त्रयमनुत्तमं तेशुद्धास्तेतुपूज्याश्चनात्र

कार्यविचारणा १४४ उपदिश्यजनान्सम्यग्गुरुस्तैचप्रबुधंतथा ब्रह्माथकारयामासहरिणोक्तंत्रयंतथा ४५ ब्रह्मजायातथालक्षवर्तिव्रत प्रभावतः साध्वीनामग्रगण्याभूत्स्मृतासर्वाघनाशिनी १४६ निःशंकंजगृहेभार्याविप्रःसन्ब्रह्मणोदितं तुधंजनोवैजगृहुर्निःपापमेनिरे विभुं १४७ कृत्वादेवगुरोःकार्यंब्रह्माद्याश्चयथागताः माघप्रभावंशंसंतःस्वस्वधामानितेययुः १४८ गालवउवाच तस्मान्माघप्रभावो यंलेशमात्रेणकीर्तितः नक्षत्राणिचगण्यंतेगण्यंतेचोदबिंदवः १४९ भूकणाअपिगण्यंतेयेनकेनमहात्मना नगण्यतेचमाघस्यप्रभा वोलेशतोभुवि १५० विचारितामयासर्वेधर्मशास्त्रेणनोदिताः नमाघसदृशोधर्मोनदृष्टोनचवैश्रुतः ५१ यत्किंचित्कुरुतेकर्ममाघेमा स्विद्विजोत्तमाः तदक्षयंफलंप्राहुर्वर्धतेवटबीजवत् ५२ माघधर्मान्पराश्रुत्वानकरोतिनराधमः सआत्महाब्रह्महाचनरकानेवगच्छ ति १५३ यइदंशृणुयान्नित्यमितिहासंपुरातनं सर्वपापविनिर्मुक्तोसर्वान्नह्युत्यवैपितॄन् १५४ भुक्त्वेहकामान्सर्वांश्चविष्णोर्लोकेमही यते १५५ इतिश्रीवायुपुराणेमाघमाहात्म्येअष्टाविंशोध्यायः २८ गालवउवाच भूयःशृणुध्वंवक्ष्यामिमाघमाहात्म्यमुत्तमम् यत्श्रु त्वामुच्यतेजंतुःकिमनुष्ठानतत्परः १ पुराकौशिकदेशेतुपत्तनेसागराह्वये वैश्योभूद्धर्मराजाख्यस्तस्यपत्नीशुचिव्रता २ तांददौविह्व लाख्यायधर्मराजश्चतत्पिता कियतासाथकालेनब्राह्मणानांसमागमात् ३ लक्षवर्तिव्रतंचक्रेविह्वलानुगतासती वैश्यागनानुत दूत्रीकिंचधर्मोनचश्रुतः ४ पुनर्जन्मांतरेसाथजातासत्यव्रताह्वया चित्रकर्मनितदूतासजातःकौशिकाह्वये ५ वैश्यापतिर्बभूवासौ पूर्वकर्मानुरोधतः ऋणानुबंधरूपेणसैवजायाबभूव ह ६ पूर्वजन्मन्युपचितात्लक्षवर्तिव्रतात्ततः जन्मन्यस्मिन्सदाख्यातापातिव्रत्ये दृढाभवत् ७ पातिव्रत्येषुसानारीचतुर्दशसुजन्मसु विख्यातातेषुलोकेषुभुजगमनुवर्तिनी ८ पतिर्भुक्त्वागृहेनित्यंवेश्यागारेव्रजन्सदा

नोपनस्यौकृतौः कालेनचकारगृहोचितं ९ अशनाभ्यंगनांबूलपादसंवाहनादिभिः पत्निमेवसदामेनेदेवंबंधुंगुरूंनथा १० मनसो
वेदनांक्वापिनचकारदृढव्रता कियत्कालेननद्भर्तीव्रणव्याधिप्रपीडितः ११ दुरात्मापंगुरभवत्कर्मणातेनवैद्विजः अत्युत्कटैःपुण्य
पापैरिहैवफलमश्नुते १२ दुरत्ययाकर्मगतिर्मनुष्याणांनसंशयः पंगुर्भूत्वागृहेतिष्ठन्वेश्याचिंतासमाकुलः १३ नाशकत्तद्गृहंगंतुंपापा
त्मासकुलाधमः सएवव्याधिरभवद्विरहःकामिनांत्वहं १४ नरक्षतिनचाश्नातिनशेतेनपिवत्यसौ कामानलसमुद्भूतज्वालामालाकुलो
द्विजः १५ तंप्राहरमणीपुण्याप्राणनाथकिमिच्छसि पश्चादिष्टंकरिष्यामिनशंकामपिशोभन १६ त्वद्दासीचैवत्वंदेवोत्वद्गुःखान्यशायया
यैद्विषिकसुखंलोकेतत्त्वत्याविंतिमेमतिः १७ प्राणादप्यधिकंमन्येसेवायामेसुखंनव कस्मात्तपसिप्राणेशकेनत्वंनिर्व्यथोवद १८ इ
त्युक्तःसद्विजःप्राहतांजायामनुवादिनीं वेश्यायामेवमेचित्तंनान्यवस्तुनिमंगले १९ तयाभुक्तेतुभुंजामिपीतेपानंपिवाम्यहं देहयात्रादि
सर्वाणितयासाकंनचान्यथा २० व्याधिनानेनदुर्बुद्धिस्तद्वार्तांनैवमेश्रुता तयैवचिंतयामेद्यभोजनादिनरोचते २१ विरहव्याधिरत्युग्रः
प्राणान्हरतिनिश्चितं पंगुस्कंधेनमामूह्ययासिचेन्नायकालयं २२ महासुखंभवेद्भद्रे व्याधिर्मेपिगमिष्यति इतितद्वचनंश्रुत्वासाना
रीचपतिव्रता २३ मनसातीवसंतुष्टाॐमित्यूचेदृढव्रता अर्धरात्रेतदाकालेकृष्णपक्षाष्टमेदिने २४ मासेभाद्रपदेचैवततोव्योमघनावि
लं तस्मिन्भयंकरेकालेसानारीतुदृढव्रता २५ स्कंधमारोप्यभर्तारंययौग्रामांतरस्थितं वेश्यागारंमहापुण्याप्रीणयंतीप्रियोक्तिभिः २६
राजकीयाश्चपूर्वेद्युश्चौराश्चपशुहारिणः अन्वधावंस्तदाचौरामांडव्यस्यमहात्मनः २७ अनुपृष्ठेनुनिक्षिप्यद्रुद्रुवुर्भयतोवनं समाधिस्थ
चमांडव्यंराजभृत्यामहाव्रतं २८ वहुधातंविनिर्भर्त्स्यचक्रुस्तंशूलरोपितं अपश्यंतीचसामार्गेमांडव्यंशूलरोपितं २९ प्रस्खलंतीपपातेह

मांडव्यो वेदनाकुलः ममदुःखकरा काचा शूले व्यथयतो निशि ३० इत्युक्ते विह्वला प्राह मांडव्यं शूलरोपितं ऋषे मां सुव्रतां विद्धि पत्युरिष्टा
भिकांक्षिणीं ३१ न वदुःखकरा ज्ञानात्पुत्री मारक्ष सुव्रतां रात्रिस्तु तमसा व्याप्ता दृष्टिश्चातीव दुःसहा ३२ न जाने तेन मार्गेनुगते भूसरित
स्तथा पतिं देवं मन्यमाना सदा भर्त्तुर्हितंकरी ३३ स्कंधेनोह्य पतिं वेश्यागारं यातुमिहोद्यता दैवाधीनात्मस्खलितो न वदुःखकरास्म्यहं॥
३४ कोसि कल्याण त्वं विप्र कस्मात्ते चेदृशी दशा इत्युक्तः सुव्रता प्राह मांडव्योस्मीति दुःखितः ३५ शूले त्वारोपितो व्यर्थं राजभृत्यैर्मदोत्कटैः
श्वस्तु सूर्योदये जाते भर्त्ता ते वमरिष्यति ३६ ममदुःखकरी यस्मात्तस्मादिति शशाप सः शापं गृहीत्वा सा नारी दुःखितातीव विह्वला ३७ उ
दयं वंधयांचक्रे पातिव्रत्यप्रभावतः लक्षवर्तिव्रतेनास्याः पूर्वजन्मकृतेन च ३८ वैधव्यं न भवेदित्थं चिंतितो हरिरीश्वरः लक्षवर्तिव्रतो
द्भूतपातिव्रत्यप्रभावतः ३९ नोदेतु भगवान्भानुः शक्तः कालात्मको रविः भर्त्तुः प्राणहरो भानुः क्वापि नोदेतु मे प्रियः ४० इत्युक्तस्तु त
या साध्व्या तेनेनोदेति भास्करः आवर्षं तु क्रियाः सर्वाः लुप्ताश्चानुदये रवेः ४१ ततश्चेंद्रादयो देवा ब्रह्मांतिकमुपाययुः यस्मान्नुदे
ति भानुस्तु देवतुष्टिकरस्ततः ४२ पतिव्रता महापुण्या त्रिषु लोकेषु विश्रुता शूलरोपितमांडव्यशापग्रस्ता
महामाते ४३ भर्त्तुरिष्टकरा पुण्या वेश्यागारमुपेयुषी उदयं बंधयामास सूर्यस्यास्य महात्मनः ४४ अज्ञातकालास्ते नैव जनाश्री
नार्दिता भुवि नयज्ञं कारयामासुर्नापि नित्यक्रिया अपि ४५ अस्माकं वितथी चक्रे प्रयत्नान्भूरिशो बलात् वज्राद्यायुधजातानि ता
नि युक्तानि भूरिशः ४६ भग्नान्येवाभवन्तूर्णं पातिव्रत्यप्रभावतः स्वयं रक्षति तां विष्णुर्धनुर्बाणधरो विभुः ४७ ततो भग्ना वयं सर्वे नवानि
कमुपागताः यज्ञभागविहीनांगान्सीराशक्तीन्सुरानिमान् ४८ शीनार्दितान्जनान्सर्वान् चोरवाधानिपीडितान् त्रैलोक्यनाथं देवे

शात्राहिनोह्युतिविह्वलान् ४९ इतिदेवैः प्रार्थितःसन्ब्रह्माब्रह्मविदांवरः तानागतानथप्रोचेनैयंदंड्याघृतव्रता ५० लक्षवर्तिव्र
तात्तुष्टः पूर्वजन्मकृताहरिः चौरव्याधिमहादुःखान्स्वयंरक्षतिचापभृत् ५१ अलभ्यंकिंभवेल्लोकेहरौतुष्टेजनार्दने हरौनुविमुखे
लोकेविपदः शाश्वतीर्ध्रुवं ५२ नाशुभंविद्यतेक्वापिलक्षवर्तिव्रतात्मना लक्षवर्तिव्रतंकरासुभगापूर्वजन्मनि ५३ तेनपुण्यप्रभा
वेणपुण्यासाध्वीपतिव्रता पातिव्रत्यप्रभावेणशक्तिरेतादृशीसुराः ५४ नशक्तावोवयंदंडेतस्याःसाध्व्याःकथंचन तस्मादत्तुनयेन
वप्रार्थयामोवयंत्विति ५५ आभाष्यदेवताःसर्वास्तैःसाकंभूमिमाययौ तदासाध्वीमहापुण्यावेश्यागृहगतंपतिं ५६ अनुभु
क्तंपुनःपंगुआनिन्येस्वगृहंक्षणात् आजगामतदाब्रह्मादेवैर्गेहंसमन्वितः ५७ प्रार्थयामासतांसाध्वींसांत्वैर्बहुविधैरपि विह्वल
प्रणताभूत्वासानारीविधिमब्रवीत् ५८ पत्युर्हितंकरावालापतिमूढामहानिशि व्रजंतीकुलनाथंचविव्यथेशूलरोपितं ५९ मांडव्यं
चमहात्मानंतेनशप्तास्मिभोनिशि उदयंवधयाकुर्वेहंवैधव्यभयातुरा ६० विपदोन्याश्चनारीभिःसहनीयाःकथंचनवैध
व्यविपदःक्वापिवार्तासह्यास्त्रियामिह ६१ स्वस्तिभूयात्कुलेमेद्यदेवतानामुनेस्तथा इत्युक्तेद्रुहिणःप्राहतांसाध्वींचधृतव्रताम्
६२ शृणुबालेमहापुण्येमंगलाधारिमेवचः लक्षवर्तिव्रतोद्भूतंक्षीणंकंपुण्यमुत्तमं ६३ मांडव्यस्तेनपुण्येननिर्व्यथोद्यभविष्यति
तस्मात्तेदापइष्यामिमाघस्नानफलंशुभं ६४ भर्तुःपुण्येनतेनैवकालमृत्युर्गमिष्यति व्याध्यापनयनेशापोभवेदत्रोमहात्मनाम्
६५ व्याधिमुक्तमिमंदेहंपुनर्जातंविदोविदुः शरीरत्यागमेवाहुर्मरणंऋषयोखिलाः ६६ शरीरेपतितेशापोनजीवेचाव्ययात्मनि तस्मा
च्छापाद्व्याधिमोक्षोभवेदितिवरंददौ ६७ मांडव्यंनिर्व्यथंमेनेशूलारोपितमग्रजः लक्षवर्तिव्रतोद्भूतंतयापुण्यमनुत्तमं ६८ दापया

मासविप्रायतेनाभूत्त्रिर्व्यथोमुनिः मुनिनानुक्तेनमाघस्नानजंसुकृतंतया ६९ तद्दत्तैर्दापयांचक्रेकालमृत्युविनाशकृत् पूर्णायुष्य
मभूत्तेनतद्दत्तुःसुकृतेनच ७० शापाद्व्याधिविनिर्मोक्षःपुत्रत्वाच्चापिमानदाः व्यसनंतुतदासाध्व्यानिर्वर्त्यैवंमहाप्रभुः ७१ तद्दत्तुस्तस्मु
नेस्त्वापिदेवानांचमहात्मनां लब्धकामैःसुरैःसर्वैःसार्धंधामस्वकंययौ ७२ देवाःसुविस्मिताभूत्वादेवेंद्राद्यामहाबलाः तुष्टुवुस्तत्र
दापुण्यालक्षवर्तिव्रतंतदा ७३ माघस्नानस्यमाहात्म्यंसाधुसाध्विति चाब्रुवन् तथैवानुमताःसर्वेब्रह्मणासहतेययुः ७४ बुभुजेस
कलान्कामान्मन्त्रीतेनमहात्मना सोपिनिर्वेदमापन्नोपापीयानितिनित्यशः ७५ तयासार्द्धंमहात्मातुमाघस्नानंचकारसः लक्षवर्तिव्र
तंसोपिपुनर्माघेचकारच ७६ तेनभोगान्महाकामान्भुक्त्वादशसहस्रकं पुत्रपौत्रसमायुक्तोजीवन्मोक्षमवाप्नुयात् ७७ तस्मान्मा
घसमोधर्मोनराणांपापकर्मणां नास्त्यन्योधर्मइत्येवसर्वधर्मविदांमतं ७८ इतिश्रीवायुपुराणेमाघमाहात्म्येएकोनत्रिंशोऽध्यायः
२९ कुटीरस्याऊचुः दत्तेतेनदुरन्तेनतुवसिष्ठायमहात्मने राक्षसोसौतिदुर्बुद्धिःकांवागतिमवापसः १ महेश्वरव्याहृतंयत्पुण्यादा
पदभीप्सितं राजर्षिःकांगतिंप्रापब्रह्महत्याशनाकुलः २ विस्तार्यतदिदंसम्यगस्मान्वाहरसुव्रत इतिपृष्टःकुटीरस्थैर्गालवोब्रा
क्यमब्रवीत् ३ गालवउवाच शृणुध्वमितिचाभाष्यसाधुसाध्वितिसंस्तुवन् कालमृत्युभयापन्नराक्षसंचकृतागसं ४ तंनेतुमाय
युस्त्वाथयमदूतामदोद्धताः तान्दृष्ट्वाद्रुद्रुवेशीघ्रंकैलासाधीशमीश्वरं ५ प्रणम्योवाचतंभीतःकिमेतद्वचनंत्वयामातापदिविषंदा
द्यात्पिताक्रीणातिचेत्सुतं ६ राजाहरतिनत्सर्वंकातत्रपरिवेदना शिवशंकरसर्वात्मन्त्राहिमांकरुणाकर ७ महाकायमहाबाहोवि
श्वरूपनमोस्तुते त्र्यंबकंमहाकायंसुगंधिंपुष्टिवर्द्धनं ८ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् इतिमंत्रार्थकैर्वाक्यैःस्तुतःशंभुर्द

यानिधिः ९ श्रीवाच कृपयादेत्यं मेघगंभीरया गिरा दुर्बुद्धिना प्रार्थितोयं मोक्षमित्येदपापना १० अजरामरतां मन्ये मोक्षंसर्वात्मना पुरा कांक्षयन्देवरमणींस्तु
दृष्ट्वैनेवकर्मणा ११ निर्द्वन्द्वो निरहंकारो निर्ममो विजितेंद्रियः वेदाभ्यासी विष्णुभक्तो नित्यानित्यविवेकवान् १२ निःसंदेहो मोक्षमेति नान्यो न कदाचन तस्मान्निः
कामुको भूत्वा निर्द्वन्द्वो निरहंकृतिः १३ दयावान्सर्वभूतेषु विंध्याद्रौ त्वं तपः कुरु प्रीतस्तेन तपसा विष्णुरिष्टान्कामान्ददाति च १४ एवमेव त्रिजन्मांते बलिपुत्रो भ
विष्यसि सहस्रबाहुर्वाणस्त्वं तदा त्वं भविता ध्रुवं १५ संबंधो विष्णुना साकं यादवेन महात्मना तेन ते भविता युद्धं छित्वा बाहुसहस्रकं १६ जित्वा जित्वा तु मां तत्र त्वयास
ख्यमुपेयुष युद्धं विधाय त्वां पश्चात्स तु मोक्षं प्रदास्यति १७ त्वया विष्टो वाणसंज्ञो नत्र दुर्बुद्धिदः परः विष्णुद्रोहान्महापापी नरकान्नैव विंदति १८ त्वयि जाते व
ले: पुत्रे ह्यारपालो भवामि ते वहुसंपत्समृद्धिश्च पुत्रपौत्रैः समन्वितः १९ भुक्त्वा कल्पं महाभोगान्कल्पांते मोक्षमेष्यसि इत्युक्त्वांतर्दधे रुद्रो राक्षसंग
तांकल्मषं २० हराज्ञया गताः सर्वे यमदूता मदोत्कटाः विहाय राक्षसं क्रूरं यमकेतनमाययुः २१ स विंध्याद्रिं ततो गत्वा तपस्तेपे तदा रूणं प्रीणयन्त
पसा विष्णुं तेन दत्तो वरः पुनः २२ पाताले बलिपुत्रत्वं प्राप्यासौ सुमहामतिः तत्र भुक्त्वा महाभोगान्कामान्मोक्षमुपेष्यसि २३ स राजर्षिर्दुरा
त्मार्थं संचरंश्च वने वने अपश्यद्ब्राह्मणं कंचिद्विहारे भ्यो ऋतुं दं निशि २४ अभ्यधावद्भक्षणार्थं क्रूरकर्मा स राक्षसः स भार्यया प्रार्थितोपि प
तिं देहीत्यनेकधा २५ अभक्षयत्ततो भार्या तं शशापाति दुःखिता ऋतुकाले यदा भार्यां त्वं गमिष्यसि भूमिप २६ तदा ते मरणं यस्मान्नान्यथा
मे वचो भवेत् चितादेहं विसृज्यैवं पश्चान्नारी दिवं ययौ २७ प्रत्यहं सोपि शक्तेश्च भार्यां हंतु पुनः पुनः दग्धस्तु त्वं राजेन गच्छ त्वं वनां
तरे २८ श्वशुरः शक्तिभार्या सा यथा चेक रूणस्त्वरं स्वाभाविकः प्रमादो हि देवानामपि देहिनां २९ जागरेण कथं कालो नेयः कालो महामते
कालं प्रमादिकं दृष्ट्वा सहनिष्यति नो ध्रुवं ३० तस्मान्मुनेकृपालो त्वं शापमोक्षं तु नं कुरु पुत्रकल्पस्तु शिष्योपि दयापात्रं ततो विदुः ३१ अस्म

त्कर्मानुसारेण दुःखान्यतानि जज्ञिरे राजा निमिर्जमात्रं तु नस्मात्तस्मिन्दयां कुरु ३२ स्तुषयावोधितो विप्रो वसिष्ठो ब्रह्मनंदनः आदाय पाणिना वारि स्व
कमंडलुतः शुचिः ३३ दत्वा माघ्याः स्नानफलं प्रोक्षितः पुनरागतः तस्मात्स मुक्तः पापः सन्पूर्वरूपमुपेयिवान् ३४ आगच्छंतं तदा भूपं पौराः सार्द्ध
पापाणयः अलंकृत्य पुरीं सर्वां दृष्ट्वा दूरं विनिर्ययुः ३५ पौरान्संभाव्य राजर्षिर्बृहत्कामं यथाक्रमं आविवेश ततः स्वांतःपुरं राज्ञ्याभिवीक्षितं ३६ क्रिय
त्कालं सुखं स्थित्वा दयितारं तु साहूयत रममाणास्तपा साकं मृनिमापमहामनाः ३७ वसिष्ठस्य प्रसादेन मुक्तिमाप सुदुर्लभां गालवश्रांतं इ
ये तत्कथितं सर्वं माघमाहात्म्यमुत्तमं ३८ निर्विशेषेणामेव वक्तुं नालं वर्षशतैरपि माघस्नानस्य माहात्म्यं एकांशेन प्रकीर्तितं ३९ तस्मादेतदनुष्ठेयं धर्मं घ
र्मं भागवतं शुभं धर्मेणानेन संतुष्टः सम्यक्चीर्णेन वै हरिः ४० ददात्यभिमतान्कामान्मुक्तिं चैव सुदुर्लभां ब्रह्मोवाच इत्युक्त्वा विरराम अथ गालवो
मुनिसत्तमः ४१ ततः कुटिरसेत्रस्थान्ब्राह्मणान्ब्रह्मवित्तमः गालवं पूजयामासुर्यथाभूतिर्यथाबलं ४२ गोभूतिलहिरण्याद्यैर्धान्यांबरविभूषणैः
प्रणेमुर्युगपद्भक्त्या तुष्टुवुर्विविधैः स्तवैः ४३ अनुज्ञाता गृहं जग्मुर्गालवेन महात्मना तदा मुनिभिराहूता यज्ञार्थं शंसितव्रतः ४४ गोदावरीं ततः प्रा
याच्छिष्यैः सह तपोनिधिः यद्वृत्तांतमखिलं शांडिल्येन महात्मना ४५ अष्टाविंशतिरस्तोभ्यः पुत्रेभ्यो भ्यधात्ततः श्रुत्वा ते प्रीतिसंतुष्टा माघमाहा
त्म्यमुत्तमं ४६ शांडिल्यं पूजयामासुः सुयज्ञं च महामतिं अनुज्ञातास्तदा ताभ्यां यथाकामं गतास्तु ते ४७ तत्रैक सुंदिलो नाम गंधर्वः सुदिवं ययौ
सप्तविंशतिसंख्याकाः पुरुषाः शंसितव्रताः ४८ बभूवुर्विस्मितास्तस्य सुयज्ञस्य महात्मनः नाम्ना पंचशिखाः सर्वे तपोनिष्ठा महाबलाः ४९ माघ
मासे सकृत्कृत्वा स्नानं माधवपूजनं तेन लब्ध्वा महाज्ञानं मुक्तिं चापि प्रपेदिरे ५० शांडिल्योपि सुयज्ञेन साकं स्वाश्रममाययौ एतद्वृत्तांतमखिलं
नारदायाब्जजोवदत् ५१ श्रुत्वाथ नारदो दिव्यां सुधाकल्पां मनोरमां संतोषमखिलं लेभे स्फुरद्गात्रो हि अभवत् ५२ विधिं प्रणम्य बहुधा कृत्वा

कृत्वाप्रदक्षिणं अनुज्ञातस्ततस्तेनत्रीन्लोकान्ययौमुनिः ५३ सूतउवाच एतत्सर्वंसमाख्यातंमाघमाहात्म्यमुत्तमं शुश्रूषुभ्योभवद्भ्यश्चे
यंगोप्यतरंनृणां ५४ कस्यापीदमनाख्येयंश्रद्धाहीनस्यदुर्मतेः देयंशिष्यायपुत्रायवेदज्ञायस्वरूपिणे ५५ सर्ववेदसमंशास्त्रंसारभूतंम
नोरमं मथित्वासर्वशास्त्राणिपयःसारमिवोद्धृतं ५६ नानेनसदृशंशास्त्रंविष्णुप्रीतिकरंशुभं विज्ञातेयत्रशास्त्रेतुसर्वंज्ञानमिदंभवेत् ५७
श्रवणादेवशास्त्रस्यविलयंयांतिसर्वशः दुरत्ययानिपापानिवहुजन्मार्जितान्यपि ५८ भक्त्यातुपूजयेद्यस्तुलिखितंपुस्तकंगृहे तद्गृहस्यांकु
रुक्षेत्रंतस्यमुक्तिःकरेस्थिता ५९ लिखितंपुस्तकंयस्तुभक्त्यादत्वाद्विजन्मने वाचस्पतिसमोभूत्वाब्रह्मलोकेप्रजायते ६० श्रुत्वाशास्त्रमिदंना
पिपुनर्मातुःपयोधरं वहुपापकरोवापिनपिबत्येवनिश्चितं ६१ पुत्रार्थीलभतेपुत्रं धनार्थीधनमाप्नुयात् धर्मार्थीप्राप्नुयाद्धर्मंभोगार्थीभोग
माप्नुयात् ६२ किमत्रबहुनोक्तेनमोक्षार्थीमोक्षमाप्नुयात् इतिश्रुत्वाशौनकाद्यामाघमाहात्म्यमुत्तमं ६३ संतोषमतुलंप्राप्ताःसंशयोत्फुल्ल
लोचनाः सूतंपौराणिकंतंतुपूजयामासुरोजसा ६४ इतिश्रीवायुपुराणेमाघमाहात्म्येब्रह्मनारदसंवादेत्रिंशोऽध्यायः ३० समाप्तं मः
शुभंभूयात्श्रीरस्तु संवत् १९४१ मिः भाद्रपदकृष्णाष्टम्यां भौमवासरयांलिखितंभयरोपाठक शुभम् भूयात् कृष्णायनमोनमः

वा॰मा
६६

# माघमाहात्म्य

॥श्री काशी विश्वनाथपुरीमें ढुंढिराजगणेशके पास राऊ अग्निहोत्रीजे यहां सिद्धविनायक यं
त्रमें माघमहात्म्य वायुपुराणका छापागया लिखा मैरोपार करछापनेवाला धन्नू जिसे लेना हो
य उससे ढुंढिराजगणेशके पास राऊ अग्निहोत्रीके दुकानपर मिलेगा संम्वत् १९४१॥ ॥ ९ ॥
भाद्र कृष्ण १०॥ शुभमस्तु ॥ ६ ॥ ॥

६६